

# प्रश्नोपनिषत्

वनखण्डी-श्री पीताम्बरापीठस्थस्वामिभिः कृतेन

# प्रकाशभाष्येण सहिता







प्रकाशक :—

**श्री पीताम्बरापीठ-संस्कृत-परिषद्**

(दतिया म० प्र०)



## प्रश्नोपनिषत्

वनखण्डी-श्री पीताम्बरापीठस्थस्वामिभिः कृतेन

# प्रकाशभाष्येण सहिता









प्रकाशक :—

श्री पीताम्बरापीठ-संस्कृत-परिषद्

( दतिया म० प्र० )

| | |
|---|---|
| प्रकाशक | पीताम्बरापीठ-संस्कृत-परिषद्<br>दतिया (म० प्र०) |
| अधिकार | सर्वाधिकार प्रकाशकाधीन |
| संस्करण | प्रथम<br>सन् १९६८ सम्वत् २०२५ चैत्र शुक्ल प्रतिपदा |
| मूल्य | १.०० |
| मुद्रक | शिवशक्ति प्रेस, प्राइवेट लि०<br>सदर बाजार, झाँसी |

# शुद्धिपत्रम्

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| २ | २० | कवन्धी | कबन्धी |
| ३ | १-४ | ऋषि | ऋषि |
| ४ | ३ | भुवनण्डलो | भुवनमण्डलो |
| ५ | २ | भ्युक्तम | भ्युक्तम् |
| ६ | १६ | दारिद्रचमनुभवन् | दारिद्र्यमनुभवन् |
| ७ | १२ | वुद्ध्या | बुद्ध्या |
| ७ | १३ | कुवन्ति | कुर्वन्ति |
| ७ | १८ | गितृयाणः | पितृयाणः |
| ८ | १६ | दक्षिणायणम | दक्षिणायनम् |
| ८ | २२ | मृगाशिरो | मृगशिरो |
| ८ | २३ | पुण्या | पुष्या |
| १० | २० | प्रतिष्ठतम् | प्रतिष्ठितम् |
| १२ | ७ | वे | वै |
| १३ | १ | ऊध्व | ऊर्ध्वं |
| १३ | २५ | एषाः | एषा |
| १४ | २२ | वधा | स्वधा |
| २६ | २० | ह्यामात्रस्तु | ह्यामात्रस्तु |
| भूमिका | ५ | शक्तपोद् | शक्त्योद् |

# प्रकाशकीयम्



जगज्जनन्याः श्रीपीताम्बरामातुः परमानुग्रहेणानन्तश्रीविभूषितैः स्वामिपादैं विरचितं प्रश्नोपनिषदः प्रकाशभाष्यं प्रकाशयितु मुद्यतैषा परिषत् परमप्रमोदमनुभवति विद्यते पूर्वप्रकाशितानां 'ईश-कठ-केन-मुण्डक-माण्डूक्य पंचोपनिषदामग्रे इयं षट् प्रश्नात्मिका प्रश्नोपनिषदागमशास्त्र जिज्ञासूनां मुमुक्षूणां कृते षष्ठं सोपानम् ।

पञ्चोपनिषदां भाष्यप्रकाशनानन्तरं बहूनां विदुषामभिमत मासीद यत्प्रसिद्धानां दशवैदिकोपनिषदामागमीयं भाष्यमाचार्य पादाः सुसम्पादयेयुरिति । तत्स्वीकृत्य सत्सु जपचिन्तनस्वाध्याय ग्रन्थलेखनादिकार्यबाहुल्येष्वपि शाक्तसिद्धान्तानां सम्यक् प्रकाशाय विरचितमेतत् प्रकाशभाष्यम् ।

आशासे यदिदं प्रकाशनं मार्गप्रदर्शन पूर्वकंसाधकानुपकुर्वत् शाक्ते जगति नूतनां जागृतिं प्रदास्यतीति ।

अस्य प्रकाशनस्य सम्पूर्ण व्यय-भारोद्वहनं श्री वैद्यनाथ आयुर्वेद भवनसंचालकैः वैद्य श्री रामनारायणशर्मभिः सहर्ष स्वीकृतमतस्तेषां कृते भगवत्याः पीताम्बरायाः सानुकूलत्वं कामये ।

**व्रजनन्दन शास्त्री**
मन्त्री
पीताम्बरापीठ संस्कृत परिषद्
**दतिया .**

# भूमिका

उपनिषदो हि भारतीयतत्वविचारकाणां तपः पूत निर्मल हृदयानां स्वानुभवैकधनानामतितेजस्विनामृषीणांवेदसार सर्वस्वाः चिन्तनस्य परांकोटिमधिरूढाः अध्यात्मपथजुषाँसततप्रज्वलितज्ञानदीपशिखा इव मार्गदर्शकाः ग्रन्थाः सन्ति ।

मानसरोवररूपेऽस्मिन् ग्रन्थसमुदयेऽवगाहनपरैरनेकाचार्यैस्ततः समुद्धृतैः ज्ञानरत्नैः जगति प्राकाश्यमानीतम् । तथा च स्वानुभव वैचित्र्येण विविध प्रकारकाणि रहस्यानि समुद्धाटितानि ।

ये उपनिषत्सु ज्ञानस्यैव प्राधान्यात् कर्ममार्गतः औदासीनस्य दोषारोपणं कुर्वन्ति तेषां कथनं तु न रमणीयं यतः ईशोपनिषदि "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं "समाः" इति स्पष्ट कथनात् उपनिषत्सु कर्ममार्गस्य परिष्करण मेवाभिप्रेतमृषिभिः न तु पूर्णतः कर्मत्यागोऽभिमतः ।

पूज्यवर्यैः राष्ट्रगुरुभिः स्वामिपादैः ईश 'केन' कठ, मुण्डक माण्डूक्योपनिषत्सु विरचितमागम परकं प्रकाश भाष्यं पूर्वमेव प्रकाशितं जातमिति न तिरोहितं विदुषाम् । सम्प्रतीदं प्रश्नोपनिषदः प्रकाशभाष्यं पूर्वं प्रकाशितेषुभाष्येषु सोपानरूपम् यद्यपि ' सर्वे सर्वार्थवाचकाः" इति मतमवलम्ब्योपनिषदां वहवः अर्थाः सम्भवन्ति तथापि स्वाभाविक रीत्या यदर्थ परिस्फुरणं जायते तदेव विद्वद्भिः स्वीक्रियते ।

प्रस्तुत ग्रन्थे यदागमपरकं भाष्यं कृतं तस्य स्वाभावि कं वैशिष्टयञ्चान्येषामाचार्याणां भाष्यैः सह पठनेन प्रकटीभवति ।

यथा प्रथमप्रश्ने अष्टमस्य ब्राह्मणवाक्यस्य भाष्यावसरे षट्चक्रनिरूपणेन तथा च अन्येष्वपि बहुषु स्थलेष्वागम परकेणार्थेन ज्ञायते ।

प्रथम प्रश्नस्य आरम्भ एव भाष्योद्देश्यस्य कथनं जातम् । "यथेयं प्रश्नोपनिषत् परापरयोर्विद्ययोर्मूलभूतान् सिद्धान्तान् प्रकटयितुं सारल्येन षड्भिः प्रश्नैः ब्रह्मविषयं व्याख्यातुमारब्धा इति ।

प्रकृतोपनिषदः भावार्थं शाक्ताद्वैते परिणामवाद एवाभिप्रेतम् । यतः परितो दृश्यमानस्य जगतः कारणं जिज्ञासवः ऋषयः ब्रह्मनिष्ठं पिप्पलादमुपेयिवन्तः "कार्यं दृष्ट्वाकारणस्य प्रश्नः अतः कार्यकारणयोस्तादात्म्यं मन्तव्यं सत्कार्यवाद सिद्धान्तात्"

शांकराद्वैत मते तु जगन्मिथ्यात्वं स्वीकृतं परं शाक्तसिद्धान्ते भेदमात्रस्यैव मिथ्यात्वं न जगतः । यथा द्वितीयप्रश्नस्य भाष्ये "प्राणस्तथानुगमात्" इति सूत्रानुसारं प्राणतत्वापरपर्यायं परमात्मानं लक्ष्यीकृत्य वागादीनामिन्द्रियाणामिदं स्तवनं प्रवृत्तमग्नि सूर्यादिभिर्नामभिः स एव स्तूयते । जगति दृश्यमानं सर्वं वास्तविक रीत्या ब्रह्मस्वरूपमेव, केवलं भेदमात्रमेव मायाशक्त्पोद्भूतं तच्च मिथ्याभूतमिति, "भूयश्चान्तेविश्वमायानिवृत्तिरिति" श्रुतेः ।

वेदान्त प्रसिद्धस्य ब्रह्मवाचकस्य "अहमिति" पदस्या गमशास्त्रेऽपि ब्रह्मण्येवान्तर्भावः । तथाहि अकारः शिव रूपः हकारस्तु शक्ति रूपः "अकारः सर्व वर्णाग्र्यः प्रकाशः परमः शिवः । हकारोन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः" अत्रैव भाष्य कारैः अकारमारभ्य हकार पर्यन्तेष्वक्षरेषु शिवादि क्षित्यन्तानां षट् त्रिंशत् तत्वानां वाच्य वाचक सम्बन्धमभिलक्ष्य वर्णनं विशदीकृतम् "एवं सर्वेषां वर्णानांलयक्रमेण "अहम्" इति अक्षर ब्रह्मतत्वेन अद्वैत रूपेण शब्द ब्रह्मणा च अभेदोपदेशो भवति "अहं ब्रह्मास्मि" इति महा वाक्येन चैक्यं संगच्छते इति निर्णयः (षष्ठ प्रश्नस्य भाष्यतः) इत्थं सुस्पष्टमेव यदिदं भाष्यम् भोग मोक्षप्रदस्यागम पथः विविधान् रहस्ययुतानर्थान् प्रकटीकरोति ।

आगमस्योपदेशाः वेदेषु तन्त्रेणाभिह्निताः सन्ति इत्यपि ज्ञायते । वस्तुतः वेदागमयोस्तु न पार्थक्यय् "आगमशास्त्रे शिवशक्ति विष्णवादि नामभिरस्यैव तत्वस्य विवरणं कृतमस्ति भगवान् शिव शिरः पल्लवादिमन्त्रैः सार्धं सर्वत्र प्रणवस्यैव व्याख्यानं तन्त्रेषु अकृत इत्यनेन वेदागमयोरभेद एवं सिद्धचति । (पञ्चम प्रश्नस्य भाष्ये)

संक्षेपतः अस्मिन् भाष्ये शाक्ताद्वैत सिद्धान्त निरूपणम्, आगम मतानुसारि सृष्टि निरूपणम्, आम्नायकथनम्, षट्चक्र निरुपणम्, ईश्वरपदस्य पञ्चशक्तीनां वर्णनम्, षोडकलारूपायाः ब्रह्मविद्यायाश्च वर्णनम् सुबोधगिरा सुस्पष्टं द्रष्टुं सुशकम् ।

प्रथम प्रश्नस्य भाष्ये शास्त्रप्रसिद्धयोः उत्तरायण दक्षिणायनयोः अति सूक्ष्मं विस्तृतं वर्णनमपि उपलभ्यते ।

इत्थं ग्रन्थार्थ प्रकाशकं प्रकाश भाष्यमिदं शाक्त मतावलम्बि साधकानामागमपरस्यार्थस्य जिज्ञासूनां च विदुषामुपकृतिं विधास्यति इत्याशास्ये ।

(तिथि वैशाख शुक्ल)
पंचमी संवत् २०२४
दिनांक १४-५-६७

**पं. ललिताप्रसाद शास्त्री**
श्री पीतांवरा पीठ
संस्कृत परिषद
दतिया म० प्र० ।

* श्रीः *

# ॥ प्रश्नोपनिषत्प्रकाशभाष्यम् ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवाः भद्रं पश्येमाक्षिभिर्यजत्राः।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेमहि देवहितं यदायुः॥
स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥
ॐ शान्तिः शान्तिः शान्तिः

प्रश्नोपनिषदो भाष्यमद्वैतार्थप्रकाशकम्।
सम्मतं पिप्पलादस्य विदुषां च सुखावहम्॥ १॥
यत्कृपालवमात्रेण परब्रह्म समश्नुते।
स्वात्मज्ञानप्रबोधाय जयन्ति गुरवः सदा॥२॥

आथर्वणिकानां ब्राह्मणोपनिषद्रूपेण प्रसिद्धा इयं प्रश्नोपनिषत् परापरयोर्विद्ययोर्मूलभूतान् सिद्धान्तान् प्रकटयितुं सारल्येन षड्भिः प्रश्नैः ब्रह्मविषयं व्याख्यातुमारब्धा। सर्वस्य कार्यजातस्य कारणभूतं ब्रह्मतत्वं तस्मादेवादिमिथुनं शिवशक्त्यपरपर्यायं प्राणरयिपदवाच्यं सूर्यचन्द्रवाच्यं वाऽऽविर्भवति, "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पय" दिति मन्त्रवर्णाच्च सिद्ध्यति। 'अहं' पदवाच्ये ब्रह्मणि एव अपराविद्या प्रतिपाद्यविषयस्य परम्परया तात्पर्यम् अत एव पूर्वैः त्रिभिः प्रश्नोत्तरैःप्रतिपादनं कृतम्। अन्ते ब्रह्मविद्यायाः सिद्धान्तः 'अहम्' रूपं ब्रह्म प्रदर्शितम्। 'तान् होवाचैताव-

देवाहमेतत्परं ब्रह्म वेद नातः परमस्ति' इति ( प्र० ६—७ ) अहमाकारेण भगवान् सनत्कुमारोऽप्याह, 'अथाऽहंकारादेश एवाहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादिति' ( छा० ७-२४-१ ) 'अहं'—पदेन आत्मन एव ग्रहणमिति सर्वं तत्रैव निरूपितम्। 'अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवै'रिति मन्त्रवर्णोऽपि समर्थयति। जगतोऽपि परमार्थतः ब्रह्मरूपता-माह 'अहमेवेदं सर्वमिति' (छा० ७-२१-१) अहं पदं व्यावहारिकावस्थायां जीवतत्वस्यापि बोधकमस्ति। वास्तविकरूपेण जीवोऽपि ब्रह्मसत्तातिरिक्त-सत्ताविरहितः, अत एव विज्ञानात्मपदेनात्र निर्दिष्टः 'परमेवाक्षरं संप्रतिष्ठते' (प्र० ४-१०) 'स सर्वज्ञः सर्वो भवति' (प्र० ४-१०) नदीदृष्टान्तेन स्पष्टी-करणाच्च। एतेन अस्या उपनिषदः अद्वैत एव तात्पर्यमवसीयते। विशेषतः ग्रन्थनिरूपणावसरे स्फुटीभविष्यतीति। आगमशास्त्रेऽपि इत्थमेव सिद्धान्तितम्। उक्तं च परापञ्चाशिकायां, "अहमिप्रलयं कुर्वन्निदमः प्रतियोगिनः" इत्यनेन जगतोऽपि ब्रह्मस्वरूपतां प्रत्यपादयत्। 'अहमेकोऽन-स्तमितप्रकाशरूपोऽस्मि तेजसां तमसाम्। अहमिति स एक उक्तोऽहन्तास्थि-तिरीदृशी तस्य'। इत्यादि प्रमाणजातैः श्रुत्युक्तार्थस्यैक्यमधिगच्छति। एवं ब्रह्मविद्याप्रतिपाद्यस्य तत्वमधिजिगीषवः षड् ऋषयः भगवन्तं पिप्पलादम-थर्वशाखाप्रवर्तकमुपसन्नाः। 'तद् विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इति नियमानुसारं विद्यामहत्वज्ञापनार्थम् आख्यायिकया उपक्रम्यते।

**ॐ सुकेशा च भारद्वाजः, शैव्यश्च सत्यकामः, सौर्यायणी च गार्ग्यः, कौशल्यश्चाश्वलायनः, भार्गवो वैदर्भिः, कबन्धी कात्यायनस्ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणाः एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः ॥१॥**

भा०—भारद्वाजगोत्रोत्पन्नः सुकेशानामकः प्रथमः, शिवेरपत्यं शैव्यः सत्यकामः द्वितीयः, सौर्यायणी गर्गगोत्रोत्पन्नः तृतीयः, कौशल्यः अश्वल-गोत्रोत्पन्नः चतुर्थः, पञ्चमः भार्गवः वैदर्भिः विदर्भापत्यं विदर्भदेशोद्भवो वा, षष्ठः कात्यायनः कबन्धी। एते षड् ऋषयः ब्रह्मपराः सकलब्रह्मोपासका ब्रह्मनिष्ठाः सन्तः परं ब्रह्म अन्वेषणपराः परं ब्रह्म निष्कलं ब्रह्म जिज्ञासवः भगवन्तं पिप्पलादमुपसन्नाः समित्पाणयः धृतकाष्ठभाराः सन्त उपहारपाणयो वा, 'रिक्तपाणिर्न सेवेत राजानं देवतां गुरुमिति' शिष्टाचारात्। उपागतास्ते एवमाचार्यं दृष्ट्वा निश्चयं कृतवन्तः यदेवायमस्माकं सर्वं समीहितविषयं वक्ष्यति उपदेक्ष्यतीति ॥१॥

**तान् ह स ऋषिरुवाच—भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं संवत्स्यथ यथाकामं प्रश्नान् पृच्छथ यदि विज्ञास्यामः सर्वं ह वो वक्ष्याम इति ॥२॥**

भा०—स ऋषिर्भगवान् पिप्पलादस्तान् समागतान् षड् ऋषीन् उवाच उक्तवान्—भूय एव तपसा ब्रह्मचर्येण श्रद्धया च संवत्सरं संवत्स्यथ। यद्यपि यूयं ब्रह्मचर्यादितपोभिः सम्पन्नास्तथापि श्रद्धया आस्तिक्यबुद्धया एकवर्षपर्यन्तमत्र निवासं कुरुत समीपवासेनैव अधिकारिणां सम्यक् परिचयो भवति। यथाकामं स्वेच्छानुसारं प्रश्नान् पृच्छथ। यदि विज्ञास्यामः सर्वं ह वो वक्ष्यामः। अधिकारित्वेन युक्तान् भवतो ज्ञास्यामस्तदा सर्वं रहस्यं वो युष्मभ्यं वक्ष्यामः प्रकटयाम इति ॥२॥

आचार्याज्ञानुसारेण संवत्सरपर्यन्तं निवासं कृत्वा षण्णां प्रश्नकर्तॄणां यथाक्रमं विहाय प्रतिपादनसौकर्यार्थं प्रथमेऽन्तिमनिर्दिष्टः कबन्धी कात्यायनः आगत्य ऋषिं पृष्टवान् अथेति—

**अथ कबन्धी कात्यायन उपेत्य पप्रच्छ।**
**भगवन् कुतो ह वा इमाः प्रजाः प्रजायन्ते इति ॥३॥**

भा०—आचार्यसमीपमुपेत्य समागम्य कबन्धी कात्यायनः पप्रच्छ पृष्टवान्। हे भगवन् कुतः कारणविशेषात् इमाः दृश्यमाना सर्वाः प्रजाः चराचरात्मिकाः प्रजायन्ते उत्पद्यन्ते। कार्यं दृष्ट्वा कारणस्य प्रश्नः। अतः कार्यकारणयोस्तादात्म्यं मन्तव्यं सत्कार्यवादसिद्धान्तात् ॥३॥

कबन्धीकात्यायनस्य जिज्ञासां परिज्ञाय भगवान् पिप्पलादस्तस्य समाधानमाह तस्मा इति—

**तस्मै स होवाच प्रजाकामो वै प्रजापतिः स तपोऽतप्यत स तपस्तप्त्वा स मिथुनमुत्पादयते रयिं च प्राणं चेत्येतौ मे बहुधा प्रजाः करिष्यत इति ॥४॥**

भा०—तस्मै पृष्टवतेऽधिकारिणे स भगवान् पिप्पलादो होवाच उक्तवान्। प्रजापतिर्जगदीश्वरः सर्वासां चराचरात्मिकानां प्रजानां कारणभूतस्तस्यां कारणावस्थायां विद्यमानानां सर्वेषां पदार्थानाम् आविर्भावक्रमेण, तपस्तप्त्वा स मिथुनमुत्पादयते। 'यस्य ज्ञानमयं तपः' इति वचनानुसारेण पूर्वं तपोऽतप्यत निश्चयं कृतवान्। तत्फलमाह मिथुनमिति

शिवशक्तिरूपम्। "एकोऽहं बहुस्यां प्रजायेय" इति वचनान्तरम्। 'शिवशक्तिरिति ह्येकं तत्त्वमाहुर्मनीषिणः' 'स देव सोम्येदमग्र आसीत्', 'एकमेवाद्वितीयम्'। आगमशास्त्रेऽपि-'शिवशक्तिमिथुनपिण्डः कवलीकृतभुवनमण्डलो जयति' (का० वि० ५) इत्यादि सर्वं रहस्यं श्रुतौ मिथुनपदेन प्रकटीकृतम्। तदेव तत्त्वं रयिं च प्राणं च। रयिं सोमं भोग्यं शक्तितत्त्वं, प्राणपदेन भोक्तृतत्त्वं शिवाख्यमुत्पादितवान्। एताभ्यां बहुधा अनेकाः षट्त्रिंशत्तत्त्वरूपाः (तत्त्वानां विस्तृतनिरूपणं कठभाष्ये तथा माण्डूक्यभाष्ये कृतमस्ति।) प्रजाः भवन्ति इति भावनया जगत्सिसृक्षुः स भगवान् परमेश्वरः अकामयत् 'सोऽकामयत' इति श्रुतेः। बहुधा प्रजाः करिष्यत इत्यनेन भागवती कामना गम्यते ॥ ४ ॥

उक्तमेव स्पष्टयति आदित्य इति—

**आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः ।**
**रयिर्वा एतत्सर्वं यन्मूर्तं चामूर्तं च तस्मान् मूर्तिरेव रयिः ॥५॥**

भा०—सच्चिदानन्दरूपेण यत्तत्त्वं वेदान्तशास्त्रे प्रसिद्धं तदेव स्थूलसूक्ष्मभेदेन परिणतम्। तस्यैव परिणामभूतं प्राणतत्त्वं रयितत्त्वं च। चिदंशतः प्राणतत्त्वं कर्तृत्वभोक्तृत्वसमन्वितं, रयितत्त्वं भोग्यरूपमानन्दरूपतः समुद्भूतम्, सत्तारूपं च ब्रह्मारभ्य पृथिवीपर्यन्तं प्रस्तृतमेतत्सर्वं प्राणपदेन रयिपदेन चात्र समुपदिष्टम्, सत्तातत्त्वं प्राणरयितत्त्वयोरन्तर्गतं कृत्वा भेदद्वैविध्यमेवात्राभिप्रेतम्। परमात्मनः आत्मभूता परा शक्तिः सर्वं स्थूलं सूक्ष्मकार्यजातमाविर्भावयति, अन्ते च विलापयतीति निश्चितं भवति। 'परास्य शक्तिः विविधैव श्रूयते' इति श्रुतेः। आगमशास्त्रेऽपि चितिः स्वतन्त्रा विश्वसिद्धिहेतुः। उक्तभेदद्वैविध्यं प्रकाशविमर्शाभ्याञ्च स्वीकृतम्। प्रकाशश्चित्पदार्थः, विमर्शो रयिपदार्थ इति निर्णयः। प्रकाशपदार्थः प्राण आदित्याख्यया अत्र व्यवहृतः शिवपदार्थस्य परिणामभूतः। रयिश्चन्द्रो विमर्शपदार्थस्य कार्यं स्थूलसूक्ष्मभेदभिन्नमित्याह रयिर्वेति—रयिपदार्थ एव स्थूलसूक्ष्मरूपेण परिणतः। अत एव मूर्तममूर्तं स्थूलं सूक्ष्ममुभयं रयिस्वरूपमेव निश्चेयम्। तस्माद्धेतोः मूर्तिः रयिः शक्तितत्त्वस्य परिणामभूता ॥५॥

प्रकाशतत्त्वं व्याख्यातुमाह अथेति—

**अथादित्य उदयन् यत् प्राचीं दिशं प्रविशति तेन प्राच्यान् प्राणान् रश्मिषु सन्निधत्ते। यद्दक्षिणां यत् प्रतीचीं यदधो यदूर्ध्वं यदन्तरा दिशो यत् सर्वं प्रकाशयति तेन सर्वान् प्राणान् रश्मिषु सन्निधत्ते ॥६॥**

स एव वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते । तदेत-दृचाभ्युक्तम ॥७॥

भा०—अदितिः पराशक्तिस्तस्या अपत्यमादित्यः स्थूलसूक्ष्मभेदेन द्विविधः प्रकाशात्मा सगुणनिर्गुणाख्यः संकोचात्मा सगुणो, गौणत्व-निर्मुक्तो निर्गुण इति प्रसिद्धः । 'या प्राणेन सम्भवति अदितिर्देवतामयी' इति श्रुतेः । एवमेव रयितत्त्वमग्नितत्त्वं द्विविधं भवति । पराशक्तेः इमान्येव नेत्रभूतानि । अथादित्यः यत् यदा स्थूलरूपेण प्राचीं पूर्वां दिशं प्रविशति तेन प्रवेशेन प्राच्यान् प्राणान् स्वप्राच्यरश्मिषु सन्निधत्ते धारयति । तेन प्रातःकालिकस्वस्वकर्तव्यबोधकेन जागरणं प्राणिषु जायते । आगमेषु पूर्वा-म्नायप्रोक्तमन्त्राणां चावबोधो जायते । एवमेव दक्षिणां प्रतीचीमुत्तरामूर्ध्वं यदधः अन्तरा दिशः सर्वम् प्रकाशयति । लौकिकालौकिकविषयान् सर्वान् दर्शयति । आगमग्रन्थेषु रश्मिपारायणनाम्ना प्रसिद्धोऽयं विषयः । षडाम्ना-याश्च एवमेव भवन्ति ॥६॥

अग्निसूर्ययोस्तादात्म्यं मत्वा कथयति—

स एव आदित्यः वैश्वानरः अग्निः प्राणिनां देहेषु पाचनक्रियाकारकः प्रकृष्टचेष्टायुक्तः विश्वरूपः सर्वरूप उदयते उभयरूपेण प्रादुर्भवति । एषोऽर्थः ऋचा मन्त्रेण चाभ्युक्तः ॥७॥

विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम् ।
सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः ॥८॥

एष प्रजानां समस्तचराचराणां जीवानां प्राणः प्रकृष्टचेष्टाप्रवर्तकः सूर्यः स्थूलसूक्ष्मरूपेण उदयति प्रकाशयति । तस्मिन् विश्वानि रूपाणि हरित्पीतादीनि वर्तन्ते । एतेन पृथिवीतत्त्वं सूचितम् । यतः पृथिव्यां सर्वाणि रूपाणि भवन्ति 'पृथिव्यां सप्तविधमिति' स्वीकारात् । हरिणं जलतत्त्वा-त्मकम् । उदकं हर उच्यते इति निरुक्तम् । जातवेदसं तेजस्तत्वात्मकं, 'जातानि वेद' इति ज्ञानस्वरूपत्वात् । अग्नितत्वमेतेन सूचितम् । परायणं सर्वेषां तत्त्वानाम् आश्रयस्थानाम्, वायुतत्त्वम् आकाशतत्त्वं च सर्वेषां तत्त्वानामुपरि एकमद्वैताख्यं तपन्तं प्रकाशयुक्तम्, शतधा वर्तमानः गुरुमण्डले गुरुरूपेण शतपत्रात्मके प्रकाशितः सहस्रारे सहस्ररश्मिरूपेण चास्ति । अस्मिन् मन्त्रे योगशास्त्रप्रसिद्धः षट्चक्राणां क्रमो निर्दिष्टो वेदितव्यः । त्रिविधानां नाडीनामिडापिङ्गलासुषुम्णानामिकानां प्रसिद्धानाम् मध्ये चन्द्र-

सूर्याग्निरूपाणां प्रसिद्धिः, षट्चक्रेषु षष्ठ्युत्तरत्रिंशत्कलानां दिनानां च सन्निवेशः। एतत्सर्वं भगवत्पादेन आचार्येण सौन्दर्यलहरीस्तोत्रे चतुर्दशे पञ्चदशे श्लोके उपदिष्टम्। उक्तब्राह्मणवाक्यानां मन्त्रे अनेन प्रकारेण समन्वयो भवति। अस्य मन्त्रस्य स्थूलरूपमेव सूर्यपरकं व्याख्यानं व्याख्यातं प्रायः सर्वैः व्याख्यातृभिः ॥८॥

संवत्सरात्मककालतत्त्वस्य जगन्नियामकत्वात् तान् नियम्य विषयं निरूपयितुमाह संवत्सर इति—

**संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणं चोत्तरं च। तद्ये ह वै तदिष्टापूर्ते कृतमित्युपासते ते चान्द्रमसमेव लोकमभिजयन्ते त एव पुनरावर्तन्ते तस्मादेते ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते एष ह वै रयिर्यः पितृयाणः ॥९॥**

भा०—रयिश्चन्द्रः सूर्यः प्राणः। इमावेवागमशास्त्रे शिवशक्तिवाच्याविति गतेन ग्रन्थनिरूपणेन व्याख्यातं तच्चाहं पदवाच्यमिति च प्रतिपादितम्, तस्माच्च किंचिदुच्छूनतां प्राप्तं कारणं सदाख्यतत्त्वमन्तर्हितमिदन्ताख्यं च प्रादुर्भूतमहन्तेदन्ता-सामानाधिकरण्यरूपं स्फुटमीश्वरतत्त्वम्। ईश्वरो दुर्घटकार्यकारिण्या मायाशक्त्या उत्पत्तिस्थितिसंहाराख्यं कार्यं संपादयति। सर्वमहमिति विद्यातत्त्वरूपायाः साहाय्यं प्राप्य, माया नामरूपात्मकं स्थूलं सूक्ष्मं भेदरूपं जगत् प्रकटयति। स्वशक्तिसंकोचात् शक्तिदारिद्र्यमनुभवन्नणुरूपेण पुरुषो जीवसंज्ञो भवति, चिदाभाससंज्ञया च क्वचिदुच्यते। स शुक्लकृष्णमिश्रादिकर्मवशीभूतोऽनेकयोनिषु भ्रमन् जन्ममरणजन्यं सुखदुःखादि अनुभवति। ब्रह्मविद्यामद्वैतरूपां लब्ध्वा मुच्यते बन्धात्। ईश्वरस्यानेकाः शक्तयः सन्ति। तासु सर्वकर्तृता, सर्वज्ञता, तृप्तिः नित्यता स्वातन्त्र्यमिति पञ्चभेदभिन्नाः स्वाभाविक्यः विद्यन्ते। यासां विषयो यदा ईश्वरस्तदा शुद्धाः, यदा जीवं विषयं कुर्वाणास्तदा अशुद्धा भवन्ति। अतः शुद्धाशुद्धभेदेन द्वैविध्यम् ज्ञातव्यम्। सर्वकर्तृता शक्तिः संकोचमापद्यमाना कलापदवाच्या भवति। सर्वज्ञता अल्पवेद्यरूपाऽविद्या (अविद्या) भवति। नित्यतृप्तिः भोगेषु जीवं रञ्जयन्ती रागाख्यां लभते। जन्ममरणप्रदा जीवलोकनियामिका कालाख्या भवति। कृत्याकृत्येषु परतन्त्रं जीवं नियमयन्ती नियतिः। एतत्सर्वं तत्त्वग्रामं भगवतः इच्छाशक्तिः ( एकोऽहं वहु स्याम् ) प्रयोजयति। ज्ञानशक्तिः प्रकाशयति। क्रियाशक्तिः

कर्मसु जीवान् प्रेरयति। इदं त्रित्वं सर्वस्य कार्यजातस्य मूलमवगन्तव्यम्। नियतितत्त्वं कुक्षीकृत्य कालतत्त्वं व्याख्यातुमाह संवत्सर इति। द्वादशमासात्मकः सर्वजगन्नियामको भगवतः शिवस्य स्वरूपः कालः, प्रजापतिः प्रजानां चराचराणां पतिः स्वामी वै निश्चयेन। उक्तञ्चेश्वरगीतायाम्—

कालः सृजति भूतानि कालः संहरते प्रजाः।
सर्वे कालस्य वशगा न कालः कस्यचिद्वशे॥
सोऽन्तरा सर्वमेवेदं नियच्छति सनातनः।
प्रोच्यते भगवान् प्राणः सर्वज्ञः पुरुषोत्तमः॥

(ई० गी० अ० ३-१६, १७)

तस्य कालस्यायने द्वे गतिरूपात्मके दक्षिणमुत्तरञ्च। आश्लेषामारभ्य सूर्यगमनं दक्षिणायनम्, श्रविष्ठामारभ्योत्तरायणमिति वैदिकी रीतिः। तद्ये कर्मिणः ह वै निश्चयेन तत्प्रसिद्धमिष्टापूर्ते श्रौतस्मार्तकर्मणी कृतमहंकरोमीति बुद्ध्या कर्तृत्वाभिमानवन्तः उपासते अनुतिष्ठन्ति ते चान्द्रमसमेव लोकमभिजयन्ते अधीनीकुर्वन्ति भोगबुद्ध्याः प्रधानत्वात् भोगं परिसमाप्य त एव पुनरावर्तन्ते। 'गतागतं कामकामा लभन्ते' 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इति गीतोक्तेः। तस्मादेते ऋषयः प्रजाकामाः संसारं कामयमाना दक्षिणं कृष्णगतिं यातायातफलवतीं प्रतिपद्यन्ते ज्ञानानधिष्ठितृत्वात् तेषां संसारातिक्रमणासम्भवात्। एष ह वै रयिर्यः पितृयाणः, केवलां क्रियाशक्तिमाश्रित्य ये कर्माणि कुर्वन्ति तेषां कृते पितृयाणमार्गः प्रकाशतत्त्वाश्रयरहितत्वेन पुनरावर्तनं भवत्येव इति ह वै निपाताभ्यां प्रदर्शितम्। तदेव अत्रोपनिषदि रयिपदेन निर्दिष्टम्॥९॥

सामान्यरूपेण दक्षिणायनं निरूप्य उत्तरायणं वक्तुमाह अथेति—

**अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्यया आत्मानमन्विष्य आदित्यमभिजयन्ते एतद् वै प्राणानामायतनमेतदमृतमभयमेतत् परायणमेतस्मान्न पुनरावर्तन्त इत्येष निरोधस्तदेष श्लोकः॥१०॥**

**पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम्। अथेमे अन्य उपरे विचक्षणं सप्तचक्रे षडर आहुरर्पितमिति॥११॥**

भा०—अथ दक्षिणायनकथनानन्तरमुत्तरेणोत्तरायणमार्गेण अनावृत्तिफलकेन गतिमन्तो महात्मानः ऋतसत्यस्वाध्यायशालिना तपसा ब्रह्मचर्येण अष्टविधमैथुनत्यागेन श्रद्धया आस्तिक्यबुद्ध्या विद्यया उपासनारूपया अथवा 'सर्वं खल्विदं ब्रह्मेति' रूपया आत्मानं परं तत्त्वमन्विष्य साक्षात्कृत्य आदित्यमभिजयन्ते प्रकाशात्मकभावमुपयान्ति। आदित्यस्य प्रकाशैकरूपत्वात् इत्यर्थः। एतद् वै प्रकाशतत्त्वस्वरूपं प्राणानामायतनमाश्रयरूपम् अमृतं विनाशरहितम् अभयं द्वैतरहितं 'द्वितीयाद्वै भयं भवति' इति श्रुतेः। एतत् परायणं सर्वेषां तत्त्वानां तिरोभावरूपं प्राप्य एतस्मात्पुनः संसारे जननमरणरूपात्मके अविद्याव्यवहारात्मके नावर्तन्ते नागच्छन्ति इत्येष निरोधः गत्यागतीनाम् ॥१०॥

एतस्मिन् विषये श्लोकोऽपि मन्त्रोऽप्याह-पञ्च ऋतवः पादा भागा यस्य तं हेमन्तशिशिरावेकीकृत्य पञ्चेत्याह यतः ऋतूनां षट्संख्यात्मकत्वात्, पितरं पितृवत् रक्षकत्वात्, द्वादशाकृतिं द्वादशमासात्मकं मेषवृषात्मकं वा, दिवः परे ऊर्ध्वे अर्धे मध्ये पुरीषिणं वृष्टिकारकमाहुः कथयन्ति कालविदः। अथेति पक्षान्तरमिमेऽन्ये परे कालविदो योगिनः प्राणसंचारविदः सप्तचक्रे मूलाधारादारभ्य सहस्रारपर्यन्तं तस्मिन् षडरेऽर्पितं स्थितं विचक्षणं विविधलक्षणयुक्तमाहुः कथयन्ति स्वशास्त्रानुसारम् ॥११॥

भानोर्मकरसंक्रान्ते षण्मासा उत्तरायणम्।
कर्कादेस्तु तथैव स्यात् षण्मासा दक्षिणायनम् ॥

( सू० सि० भा० १४-९ )

गतिप्रतिपादकपुराणवचनान्यप्यत्र संग्राह्याणि भवन्ति—

'अश्विनी कृत्तिका याम्या नागवीथीति शब्दिता।
रोहिण्यार्द्रा मृगाशिरो गजवीथ्यभिधीयते ॥
पुण्याश्लेषा तथादित्या वीथी चैरावती स्मृता।
एतास्तु वीथयस्तिस्रः उत्तरो मार्ग उच्यते ॥
तथा द्वे चापि फल्गुन्यौ मघा चैवार्षभी मता।
हस्तश्चित्रा तथा स्वाती गोवीथीत्यभिधीयते ॥
ज्येष्ठा विशाखानुराधा वीथी जारद्गवी मता।
एतास्तु वीथयस्तिस्रो मध्यमो मार्ग उच्यते ॥
मूलाषाढोत्तराषाढा अजवीथ्यभिशब्दिता।
श्रवणं च धनिष्ठा च मार्गी शतभिषस्तथा ॥

वैश्वानरी भाद्रपदे रेवती चैव कीर्तिता।
एतास्तु वीथयस्तिस्रो दक्षिणो मार्ग उच्यते ॥

एभिर्नक्षत्रैरेवं निर्णीयते नागवीथीगजवीथ्यैरावतवीथ्यात्मक उत्तरो मार्गः। अजवीथीमृगवीथीवैश्वानरवीथ्यात्मको दक्षिणो मार्गः। आर्षभवीथीगोवीथीजारद्गवीवीथ्यात्मको मध्यमो मार्गः। दक्षिणेन पथा गतस्य पुनरावर्तनमुत्तरेण अपुनरावर्तनम् सृष्ट्यन्ते परमब्रह्मप्राप्तिफलम्। कर्मोपासनारहितस्य अतीवजडस्य पुनः पुनः सृष्टावावर्तनम्। 'जायस्व म्रियस्व एतत्तृतीयं स्थानम्। (छा० ५-१०-८) शतं हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका। 'तयोर्ध्वमायन्नमृतत्वमेति'। (क० ६-१६)।

"ऊर्ध्वोत्तरमृषिभ्यस्तु ध्रुवो यत्र व्यवस्थितः।
एतद्विष्णुपदं दिव्यं तृतीयं व्योम्नि भासुरम् ॥
निर्धूतदोषपङ्कानां यतीनां संयतात्मनाम्।
स्थानं तत्परमं विप्र पापपुण्यपरिक्षये।
यत्र गत्वा न शोचन्ति तद्विष्णोः परमं पदम् ॥ इति।

नासिकान्तर्मध्यसंयमात् किमत्र सव्यापसव्यसौषुम्णेषु (शि० सू० ३) नासिकान्तर्वर्तिन्याः प्राणशक्तेश्चन्द्रसूर्यसुषुम्णात्मिकायाः संयमात् परायां संविदि विमर्शे सततरता अन्तरं मध्यं प्रधानमित्यादि "सव्यापसव्यमार्गस्था" इति ललितासहस्रनामसु। मध्यविकासाच्चिदानन्दलाभः ॥१७॥ इति शक्तिसूत्रम्। 'मध्ये वामनमासीनं विश्वेदेवा उपासते' इति श्रुतेश्च। योगिनां मध्यमो मार्गः सौषुम्णेति ख्यातः। अत्र स्पष्टतया द्वयमेव प्रदर्शितम्। इति।

संवत्सरस्य प्रजापतिस्वरूपो द्वादशभागात्मको मासोऽपि प्राणस्वरूप एवेति प्रतिपादयन्नाह मासेति—

**मासो वै प्रजापतिस्तस्य कृष्णपक्ष एव रयिः शुक्लः प्राणः तस्मादेत ऋषयः शुक्ल इष्टिं कुर्वन्तीतर इतरस्मिन् ॥१२॥**

**अहोरात्रो वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते ब्रह्मचर्यमेव तद् यद् रात्रौ रत्या संयुज्यन्ते ॥१३॥**

**अन्नं वै प्रजापतिस्ततो ह वै तद् रेतस्तस्मादिमाः प्रजाः प्रजायन्त इति ॥१४॥**

भा—मासो वै प्रजापतिः अमान्तः पूर्णिमान्तो वा चान्द्रमसः संक्रमणान्तो, वा सौरो मासो मेषवृषात्मकः ऋतुयागप्रवर्तकः। अस्मिन् शुक्लकृष्णरहितत्वात् चान्द्रमस एव ग्राह्यः। प्रजापतिस्वरूपः तस्य कृष्णपक्ष एव निश्चयेन रयिः, शुक्लः पक्षः प्राणः प्रकाशात्मकः इति। कर्ममार्गरताः ऋषयः शुक्ल इष्टिं कुर्वन्ति। इतरे कर्मिण इतरस्मिन् कृष्णे स्वानुष्ठानं कुर्वन्ति सकामेन भोगासक्तत्वात्, एषामेव पुनरावर्तनं भवति ॥१२॥

अहोरात्रात्मकः कालोऽपि प्रजापतिस्वरूपः तस्य अहरेव दिवस एव प्राणः प्रकाशात्मकत्वात्, रात्रिः रयिस्वरूपा। अत एव दिवा दिवसे ये प्रजापतिव्रतमनुष्ठातारो ग्राम्यधर्मानुयायिनो रत्या संयुज्यन्ते, ते प्राणं प्रस्कन्दन्ति निर्गमयन्ति विनाशयन्ति। यद् रात्रौ रत्या संयुज्यन्ते तद् ब्रह्मचर्यमेव प्राणविनाशाभावत्वेन विधानात् ॥ १३ ॥

अन्नं वै प्रजापतिः अन्नगताः प्राणा इति अन्नमपि प्रजापतिस्वरूपमेव, तस्मादिमाः प्रजाः प्रजायन्ते अन्नमाश्रित्यैव सर्वजन्तूनां जीवनं भवतीत्याशयः। अन्नादेव रेतो वीर्यं, तस्मादेव प्रजानामुत्पत्तिः भवति ॥१४॥

प्रजापतिव्रतफलमाह तदिति—

**तद् ये ह वै प्रजापतिव्रतं चरन्ति ते मिथुनमुत्पादयन्ते तेषामेवैष ब्रह्मलोको येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम् ॥१५॥**

**तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति ॥१६॥**

भा०—तत् प्रसिद्धं ये प्रवृत्तिमार्गानुयायिनः प्रजापतिव्रतम्—'ऋतौ भार्यामुपेयात्' इति ह वै चरन्ति कुर्वन्ति, ते मिथुनं कन्यकां पुत्रं वा उत्पादयन्ते जनयन्ति, तेषामेव एष ब्रह्मलोकः बृहत्करणात्मको लोकः सन्ततिद्वारकवृद्धिकरणात्मको लोक इत्यर्थः। येषां तपः ऋतस्वाध्यायात्मकं

रात्रौ रत्या संयोजनं ब्रह्मचर्यं सत्यम् अनृतत्यागात्मकं सत्यभाषणम् एतत्सर्वं येषु प्रतिष्ठितं प्रतिष्ठां प्राप्तं, तेषामेवेति पूर्वेण सम्बन्धः ॥१५॥

ये देवयानमार्गानुयायिनः, तेषां कृते विरजः मालिन्यरहितः ब्रह्मलोकः अपुनरावृत्तिलक्षणः। न येषु ज्ञानकर्मोपासकेषु जिह्मं कौटिल्यम् अनृतम् असत्यं माया मिथ्याचरणं चेति प्रश्नसमाप्तिसूचकः।

'शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते।
एकया यात्यनावृत्तिमन्ययावर्तते पुनः'।

इति गीतावचनात् पूर्वोक्तं समन्वितं भवति ॥१६॥

## इति प्रथमः प्रश्नः



## अथ द्वितीयः प्रश्नः

निजांशजातेषु निखिलजीवेषु विभेदबुद्धिर्मायेति मायायाः भेदजनकत्वात् जीवानां भोगार्थत्वाच्च प्रकृतिः सत्वरजस्तमसां साम्यावस्थातो वैषम्यमीश्वरप्रेरणया प्राप्य जगदाकारेण परिणमते। प्रथमः परिणामो महान् बुद्धितत्त्वं तस्मादहङ्कारः, अहङ्कारान्मनस्तत्त्वं, मनसो पञ्चज्ञानेन्द्रियाणि सत्वपरिणामाज्जायन्ते। परमात्मनो ज्ञानशक्तेरेतत् सर्वमुत्पद्यते 'सत्वात्संजायते ज्ञानमिति' स्मृतेः। रजसः पञ्चप्राणाः प्राणापानादयः कर्मेन्द्रियाणि च क्रियाशक्तिपरिणाममाश्रित्य भवन्ति। तमसः पञ्चतन्मात्राणि पञ्चस्थूलानि भूतानि च जायन्ते इति तत्त्वग्रामस्य परिणामक्रमः एतद्दर्शयितुं द्वितीयः प्रश्नः प्रवर्तते। प्राणस्य श्रैष्ठ्यमाख्यायिकया आह अथेति—

**अथ हैनं भार्गवो वैदर्भिः पप्रच्छ। भगवन्! कत्येव देवा प्रजां विधारयन्ते कतर एतत् प्रकाशयन्ते कः पुनरेषां वरिष्ठः इति ॥१॥**

**तस्मै स होवाच आकाशो ह वा एष देवो वायुरग्निरापः पृथिवी वाङ् मनश्चक्षुश्रोत्रं च। ते प्रकाश्याभिवदन्ति वयमेतद् बाणमवष्टभ्य विधारयामः ॥२॥**

भा०—अथ प्रथमप्रश्नसमाधानानन्तरं ह एनम् भगवन्तं पिप्पलादं भार्गवो वैदर्भिः पप्रच्छ पृष्टवान् हे भगवन् कति संख्याका देवाः प्रजां विधारयन्ति? एवेति निश्चयार्थे। स्वस्वव्यापारे नियुक्ताः सन्ति। कतर एतत् सर्वं प्रकाशयन्ते कार्यरूपेणाविर्भावयन्ति ? कः पुनरेषां वरिष्ठः श्रेष्ठः इति ॥१॥

तस्मै भार्गवाय वैदर्भये स भगवान् पिप्पलाद उवाच उक्तवान्। आकाशो ह वै देवः वायुः अग्निः आपः पृथिवी वाङ् मनश्चक्षुः श्रोत्रं चेत्यनेन पंचतत्त्वानि एकादशेन्द्रियाणि च। त एते सर्वे प्रकाश्य स्थूलरूपेण सङ्घीभूय वदन्ति वयमेतद् बाणमवष्टभ्य शरीरं निर्माय विधारयामः एतस्य स्थूलशरीरस्य कारणभूता वयमित्यर्थः ॥२॥

पूर्वोक्तेभ्यः सर्वेन्द्रियादिभ्यः प्राणस्य श्रैष्ठ्यम प्रतिपादयन्नाह तानिति—

**तान् वरिष्ठः प्राण उवाच मा मोहमापद्यथ। अहं वै तत् पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामि इति। तेऽश्रद्दधाना बभूवुः ॥३॥**

**सोऽभिमानादूर्ध्वमुत्क्रमत इव, तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रामन्ते। तस्मिंश्च प्रतिष्ठमाने सर्व एव प्रतिष्ठन्ते। तद् यथा मक्षिका मधुकरराजानमुत्क्रामन्तं सर्वा एव उत्क्रामन्ते तस्मिंश्च प्रतिष्ठमाने सर्वा एव प्रतिष्ठन्त एवं वाङ् मनश्चक्षुः श्रोत्रं च। ते प्रीताः प्राणं स्तुवन्ति ॥४॥**

भा०—तान् चक्षुरादीन् वरिष्ठः सर्वश्रेष्ठः प्राणः उवाच उक्तवान्। हे चक्षुरादयः मा मोहमापद्यथ मोहमज्ञानं मा आपद्यथ प्राप्नुत युष्माकमिदं कथनमयुक्तमित्यर्थः। यतः अहमिति शिवशक्तिसामरस्यतादात्म्यमापन्नोऽहं प्रकाशस्वरूपः प्राणः प्रकृष्टचेष्टात्मकः क्रियाशक्तिपरिणाममसाश्रित्य पञ्चधा प्राणापानादिस्वरूपमात्मानं प्रविभज्य विभागं कृत्वा एतद् बाणं शरीरमवष्टभ्य स्वस्वकार्यकरणसामर्थ्यं प्रदाय विधारयामि संचालयामि। इति श्रुत्वा ते चक्षुरादयो अश्रद्दधाना बभूवुः। तत्कथनमवज्ञाय स्थिता इत्यर्थः ॥३॥

सोऽभिमानात् मिथ्याहंबुद्ध्या शरीरात् ऊर्ध्व बहिः उत्क्रमत इव बभूव। तस्मिन् प्राणे उत्क्रामति सति, अथ इतरे प्राणाश्चक्षुरादयः सर्वे उत्क्रामन्ते। प्राणं विना शरीरे स्वस्थितिमलभमानाः सन्तः प्राणस्य मुख्यत्वमभ्युपागमन् इति। तस्मिन् प्राणे शरीरे प्रतिष्ठमाने प्रतिष्ठां प्राप्ते सति सर्व एव चक्षुरादयः प्रतिष्ठन्ते स्वस्वकार्यकरणसामर्थ्यं लभन्त इत्यर्थः। एतन्मधुकरराजदृष्टान्तेन स्पष्टयति। तद्यथा—मधुकरराजानं मक्षिकाणां राजानं प्रधानमुत्क्रामन्तमुड्डीयमानमाश्रयात् अन्याः सर्वा मक्षिका उत्क्रामन्ते तस्मिंश्च प्रतिष्ठमाने स्थिते सति प्रातिष्ठन्त। एवमेव प्राणेन्द्रियाणां व्यवस्था भवति। एवमिन्द्रियाणां स्वस्वप्राधान्याभिमानं प्राणेन निरस्तम्। ते सर्वे चक्षुरादयः प्रीताः वास्तविकं तत्त्वं विज्ञाय हृष्टाः सन्तः स्तुवन्ति तुष्टुवुरित्यर्थः ॥४॥

तदित्थं तैः प्रशंसितम्। यथा—

**एषोऽग्निस्तपति एष सूर्यः पर्जन्यो मघवान् एषः।**
**वायुरेष पृथ्वी रयिर्देवः सदसच्च अमृतं च यत् ॥५॥**

**अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम्।**
**ऋचो यजूंषि सामानि यज्ञः क्षत्रं च ब्रह्म च ॥६॥**

**प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे।**
**तुभ्यं प्राण प्रजास्त्विमा बलिं हरन्ति यः प्राणैः प्रतितिष्ठसि ॥७॥**

भा०—"प्राणस्तथानुगमात्" इति सूत्रानुसारं प्राणतत्त्वापरपर्यायं परमात्मानं लक्ष्यीकृत्य वागादीनामिन्द्रियाणामिदं स्तवनं प्रवृत्तम्। अग्निसूर्यादिभिर्नामभिः स एव स्तूयते, जगति दृश्यमानं सर्वं वास्तविकरीत्या ब्रह्मस्वरूपमेव, केवलं भेदमात्रमेव मायाशक्त्योद्भूतं' तच्च मिथ्याभूतमिति "भूयश्चान्ते विश्वमायानिवृत्तिरिति" श्रुतेः। एष प्रसिद्धः अग्निः अग्रणीत्वाद्देवानां तपति ज्वलति, एष सूर्यः प्रकाशात्मा एषः पर्जन्यः मेघः एषः मघवान् इन्द्रः एष वायुः एषा पृथिवी एष देवः रयिः चन्द्रः सत् मूर्तं दृश्यमानम्। असत् अमूर्तम्। अदृश्यमानं यत् कारणरूपेण निर्विकारात्मना स्थितममृततत्त्वं तदपि प्राणस्वरूपमेव कार्यकारणयोरैक्यात् ॥५॥

भा०—रथनाभौ रथमध्यस्थूलकाष्ठेऽर्पितमरा इव प्राणे इदं सर्वमर्पितं स्वर्णे आभूषणादिरिव कूर्मोऽङ्गानीव सर्वशः इति वदाविर्भावतिरोभावौ

भवतः, शब्दब्रह्मतत्त्वमपि तदेव तत्त्वं यतः ऋच ऋग्वेदोक्ता मन्त्राः, यजूंषि यजनबोधकानि याजुषाणि वाक्यानि, सामानि गीतिप्रतिपादकानि वेदवाक्यानि, यज्ञः अश्वमेधादिः, क्षत्रं क्रियाशक्तिः, ब्रह्म ज्ञानशक्तिश्च सर्वमेतद् ब्रह्मस्वरूपमेवेति स्पष्टार्थः ॥६॥

भा०—प्रजोत्पादकेन रूपेण प्रजापतिः सन् हे प्राण त्वं चरसि व्यापारयसि, त्वं च पुत्ररूपेण प्रतिजायसे उत्पद्यसे। यस्त्वं प्राणैः सह इन्द्रियैः सह अस्मिन् शरीरे प्रतितिष्ठसि प्रतिष्ठां प्राप्नोसि सर्वश्रेष्ठत्वेन हे प्राण! इमाः सर्वाः प्रजाः सर्वे लोकाः तुभ्यं बलिं पूजोपहारान् हरन्ति ददति, सर्वं पूजनादिकं त्वामेव प्राप्नोति "नृणामेको गम्यस्त्वमसि पयसामर्णव इव", 'सर्वदेवनमस्कारः केशवं प्रति गच्छति', इतिवत् ॥७॥

'एकं सद् विप्रा बहुधा वदन्ति' इति श्रौतप्रमाणेनानेकविभूतिरूपमास्थाय सर्वं कार्यजातम् ईश्वर एव सम्पादयति। अनन्तशक्तिसम्पन्नश्च सः। देवतारूपमपि तस्यैव शक्तिविशेषात्मकमिति प्रतिपादयन्नाह देवानामिति—

देवानामसि वह्नितमः पितॄणां प्रथमा स्वधा।
ऋषीणां चरितं सत्यमथर्वाङ्गिरसामपि ॥८॥

इन्द्रस्त्वं प्राणतेजसा रुद्रोऽसि परिरक्षिता।
त्वमन्तरिक्षे चरसि सूर्यस्त्वं ज्योतिषां पतिः ॥९॥

यदा त्वमभिवर्षस्यथेमाः प्राणते प्रजाः।
आनन्दरूपास्तिष्ठन्ति कामायान्नं भविष्यतीति ॥१०॥

भा०—देवानामिन्द्रवरुणादीनां मध्ये वह्नितमः आहुतिप्रापकः अग्निदेवः, पितॄणां मध्ये प्रथमा वधा स्वान् दधाति पुष्णातीति स्वधा प्रथमा गृहस्थानां देवकार्यात् प्रथमा आविर्भवति, अथर्वाङ्गिरसां ऋषीणां सत्यं चरितं सदाचरणमपि त्वमसि ॥८॥

भा०—हे प्राण त्वं इन्द्रः परमात्मा त्वं तेजसा सर्वश्रेष्ठतेजोरूपेण परिरक्षिता रक्षको रुद्रोऽसि 'रुद्राणां शंकरश्चास्मि' इति गीतोक्तेः। त्वमन्तरिक्षलोके ज्योतिर्मये ज्योतिषां पतिः स्वामी सूर्यः सन् चरसि गतिमानसि ॥९॥

भा०—हे प्राण यदा त्वं पर्जन्यरूपेणाभिवर्षसि वृष्टिं करोषि अथेमा लोकस्थाः प्रजाः कामायाभिलाषितान्नं भविष्यतीति मत्वा आनन्दरूपास्तिष्ठन्ति ॥१०॥

व्रात्यस्त्वं प्राणैक ऋषिरत्ता विश्वस्य सत्पतिः ।
वयमाद्यस्य दातारः पिता त्वं मातरिश्वनः ॥११॥

या ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि ।
या च मनसि सन्तता शिवां तां कुरु मोत्क्रमीः ॥१२॥

प्राणस्येदं वशे सर्वं त्रिदिवे यत्प्रतिष्ठितम् ।
मातेव पुत्रान् रक्षस्व श्रीश्च प्रज्ञाश्च विधेहि न इति ॥१३॥

भा०—हे प्राण त्वं व्रात्योऽसि व्रतमर्हतीति व्रत्यः व्रत्य एव व्रात्यः प्रजापतिव्रतब्रह्मचर्यादिव्रतेषु प्राधान्यं सर्वत्र प्राणस्यैवास्ति इति हेतोर्व्रात्येति संज्ञा । अथवा प्रथमजत्वात् संस्कर्तुरन्यस्याभावात् व्रात्यः शुद्धत्वात् । एक ऋषिः अद्वितीयो गतिमान् सुप्तेऽपि प्राणस्य जागरणं प्रसिद्धमिन्द्रियाणां तदा विलयनं जायते । सत्पतिः सज्जनानां पतिः योगेन रक्षकः विश्वस्य चराचरस्य अत्ता भक्षकः, वयं सर्वे चक्षुरादयो गौणप्राणा इन्द्रियाणीति यावत् । आद्यस्य अदनीयपदार्थस्य दातारः । इन्द्रियाणि स्वस्वविषयाणि गृहीत्वा प्राणायैव समर्पयन्तीति प्रसिद्धम् । त्वं मातरिश्वनः कार्यवायोः पिता जनक कारणत्वात् ॥११॥

या ते तनूर्विस्तृतिः वाचि वागिन्द्रिये प्रतिष्ठिता वाग्व्यापारकर्त्री, या श्रोत्रे, या च चक्षुषि या च मनसि सन्तता विस्तारमाप्ता, तामस्मिन् शरीरे शिवां कल्याणप्रदां कुरु, येन स्थिरीकरणेन वयं स्वस्वकार्यं कर्तुं समर्था भवेम । मा अस्मात् शरीरात् उत्क्रमीः उत्क्रमणरूपं प्रयाणं कुरु । प्राणे सत्येव सर्वेन्द्रियाणां व्यापारसम्भव इति भावः ॥१२॥

भा०—इदं दृश्यमानं यत् दिवे लोकत्रये प्रतिष्ठितं तत्सर्वं प्राणस्य वशे अधीनमस्ति । अत एव हे प्राण मातेव अस्मान् पुत्रसदृशान् रक्षस्व श्रीः ऐश्वर्यं प्रज्ञां सदसद्विवेकवतीं बुद्धिं नः अस्मान् विधेहि देहि यया त्वदनुकूलमाचरेम, यतो व्यर्थाभिमानं मा भवेत् ॥१३॥

संक्षेपतः अनयाऽऽख्यायिकया प्राणस्य श्रेष्ठत्वमन्येषां मनइन्द्रियाणां गौणत्वं च प्रदर्शितमिति ।

## इति द्वितीयः प्रश्नः ।



## अथ तृतीयः प्रश्नः ।

पूर्वस्मिन् प्रश्ने प्राणतत्त्वस्य प्राधान्यमुपदिश्येदानीं विशेषप्रकारकं तद्रहस्यं प्रकटयन् तृतीयप्रश्नमवतारयति अथेति—

**अथ हैनं कौसल्यश्चाश्वलायनः पप्रच्छ भगवन् कुत एष प्राणो जायते ? कथमायाति अस्मिन् शरीरे ? आत्मानं वा प्रविभज्य कथं प्रातिष्ठते ? केनोत्क्रमते ? कथं बाह्यमभिधत्ते ? कथमध्यात्ममिति ? ॥१॥**

**तस्मै स होवाच अतिप्रश्नान् पृच्छसि ब्रह्मिष्ठोऽसीति तस्मात्तेऽहं ब्रवीमि ॥२॥**

भा०—अथ द्वितीयप्रश्नोपदेशानन्तरं कौसल्य आश्वलायनः एनं भगवन्तं पिप्पलादं पप्रच्छ पृष्टवान् । हे भगवन् कुतः कारणविशेषात् एष प्राणो जायते आविर्भवति ? अस्मिन् शरीरे कथमायाति स्वव्यापारं कर्तुम् ? आत्मानं स्वस्वरूपं प्रविभज्य प्राणापानसमानोदानव्यानादिरूपेण विभागं कृत्वा प्रातिष्ठते शरीरधारणादिव्यापारं करोति केन रूपेणोत्क्रमणं लोकान्तरं गमनं तथा बाह्यमेवमध्यात्मं च किमात्मकं रूपमस्येति भवान् मामुपदिशतु इति प्रश्नाशयः ॥१॥

भा०—इति श्रुत्वा तस्मै पृष्टवते कौसल्याश्वलायनाय उवाच उक्तवान् । हे शिष्य त्वं ब्रह्मिष्ठोऽसि ब्रह्मनिष्ठोऽसि, अतिप्रश्नान् अतिसूक्ष्मान् प्रश्नान् पृच्छसि । तस्मात्ते तुभ्यमहमुपदिशामि ॥२॥

**आत्मनः एष प्राणो जायते । यथैषा पुरुषे छायैतस्मिन्नेतदाततं मनोकृतेनायात्यस्मिन् शरीरे ॥३॥**

भा०—एष प्रसिद्धः प्राणः शिवरूपस्यात्मनो ब्रह्मणः जायते आविर्भवति क्रियाशक्तिमधिकृत्य यथा पुरुषे छाया पुरुषाकृतिविशिष्टा तद्वत् ब्रह्मणः सादृश्यमनुकुर्वाणो मनोकृतेन मनस्तत्वद्वारा अस्मिन् शरीरे आयाति आविर्भवति एतत्प्राणतत्वं सर्वशरीरे आततं व्याप्तं च भवति ॥३॥ तस्याधिकारमाह यथेति—

**यथा सम्राडेवाधिकृतान् विनियुङ्क्ते एतान् ग्रामानेतान् ग्रामानधितिष्ठस्वेत्येवमेषप्राण इतरान् प्राणान् पृथक् पृथगेव सन्निधत्ते ॥४॥**

भा०—यथा सम्राट् राजा अधिकृतान् अधिकारिवर्गान् विनियुङ्क्ते राज्यसंचालनाय एतान् ग्रामान् एतान् ग्रामान् त्वमधितिष्ठस्व स्वाधिकारे कृत्वा राज्यव्यवस्थां कुरु। एवमेव प्राणः इतरान् प्राणान् पृथक् पृथगेव सन्निधत्ते स्वस्वव्यापारान् कर्तुं नियोजयति शरीरव्यवहारायेति ॥४॥

**पायूपस्थेऽपानं चक्षुः श्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रातिष्ठते मध्ये तु समानः। एष ह्येतद्धुतमन्नं समंनयति तस्मादेताः सप्तार्चिषो भवन्ति ॥५॥**

भा०—पायुश्चोपस्थं च पायूपस्थं प्राण्यङ्गत्वात् एकत्वं तस्मिन् अपानं रूपं चक्षुः श्रोत्रंच तस्मिन् मुखनासिकाभ्यां च स्वयं प्राणः प्रातिष्ठते मध्ये नाभिभागे समान एष समानः हुतं भुक्तमन्नमाहारादि समं यथास्थानं नयति प्रापयति तस्मादशितपीतेन्धनात् अग्नेः औदर्यात् एताः सप्तार्चिषः सप्तसंख्याकाः दीप्तयः दर्शनद्वयं श्रवणद्वयं प्राणद्वयं मुखमिति सप्तार्चिषः भवन्ति ॥५॥

**हृदि ह्येष आत्मा। अत्रैतदेकशतं नाडीनां तासां शतं शतमेकैकस्यां द्वासप्ततिर्द्वासप्ततिः प्रतिशाखा नाडीसहस्राणि भवन्त्यासु व्यानश्चरति ॥६॥**

भा०—हृदि हृदये हि निश्चयेन एष आत्मा अहं प्रत्ययेनापरोक्षभूतः अत्र हृदये एतदेकशतं नाडीनां समुदायः एकं शतं तासां नाडीनां प्रत्येकं एकैकस्यां नाड्यां शतं शतं तासां प्रत्येकं द्वासप्ततिर्द्वासप्ततिभेदैः प्रतिशाखा

नाडीसहस्राणि भवन्ति (७२०००) आसु सर्वासु नाडीसु व्यानश्चरति ॥६॥

अथ एकयोर्ध्व उदानः पुण्येन पुण्यलोकं ।
नयति पापेन पापमुभाभ्यामेव मनुष्यलोकम् ॥७॥

भा०—अथ एकया सुषुम्नाख्यया नाड्या ऊर्ध्वं उर्ध्वगतिमान् उदानश्चरति पुण्येन कर्मणा पुण्यलोकं पुण्ययोनिं पापेन कर्मणा अधोलोकमुभाभ्यां पुण्यपापाभ्यां मिश्राभ्यां मनुष्यलोकं नयति प्रापयतीत्यर्थः ॥७॥

आदित्यो ह वै बाह्यः प्राणउदयति एष ह्येनं चाक्षुषं प्राणमनुगृह्णानः । पृथिव्यां या देवता सैषापुरुषस्यापानमवष्टभ्यान्तरा यदाकाशः स समानो वायुर्व्यानः ॥८॥

भा०—प्रतिदिनं प्रकाशाख्यतत्त्वेन पुञ्जीभूत आदित्यो बाह्यः प्राण उदयति प्रत्यक्षं सर्वजगत् चाक्षुषं प्राणमनुग्रह्णानो दर्शनसामर्थ्यं ददानः सन् प्रकाशयति । पृथिव्यां या देवता पृथिव्याभिमानिनी सा एषा पुरुषस्य अपानं अपानाख्यं प्राणभेदमवष्टभ्य वशीकृत्य अधोनयनेनानुग्रहं कुर्वन्ती वर्तते अन्तरामध्ये यदाकाशः समानः यथाकाशः साम्यधर्मवान् तथा समानस्तुल्यः वायुः व्यानोऽनुगृह्णानो वर्तते व्यानमित्यभिप्रायः वायुव्यानयोर्व्याप्तित्वात् तुल्यत्वम् ॥८॥

तेजो ह वा उदानस्तस्मादुपशान्ततेजाः ।
पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः ॥६॥

यच्चित्तस्तेनैष प्राणमायाति प्राणस्तेजसा ।
युक्तः सहात्मना यथा संकल्पितं लोकं नयति ॥१०॥

भा०—तेजो ह वा उदानः तेजस्तत्वस्वरूपो-निश्चयेन उदानः प्राणभेदः तस्मादुपशान्ततेजा यदा मरणकाले प्राणी शीतत्वयुक्तो भवति इन्द्रियैर्मनसि सम्पद्यमानैः पुनर्भवं देहान्तरं प्राप्तुकामस्तदा जायते, आत्मना सह जीवात्मना सार्धं यच्चित्तः यद्भावना-भावितस्तेन प्राणमायाति प्राणेनयुक्तो भवति । प्राणस्तेजसा उदानेन युक्तो यथा संकल्पितं

भावितं लोकं नयति प्रापयति 'यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् । तंतमेवेति कौन्तेय सदातद्भावभावितः ॥ "इति गीतावचनेन च संगच्छते ॥९, १०॥

**य एवं विद्वान् प्राणं वेदन हास्य प्रजा हीयतेऽमृतो भवति तदेष श्लोकः ॥११॥ उत्पत्तिमायतिं स्थानं विभुत्वं चैव पञ्चधा । अध्यात्मं चैव प्राणस्य विज्ञायामृतमश्नुते विज्ञायामृतमश्नुत इति ॥१२॥**

## इति तृतीयः प्रश्नः ।



भा०—य एवं विद्वान्पूर्वोक्तं प्राणतत्त्वं वेद जानाति न हास्य प्रजा हीयते । तस्य सन्ततिर्न विनश्यति । अमृतो भवति मरणजन्यक्लेशाद् रहितो भवति । अस्मिन् विषये एष श्लोको मन्त्रो भवति ॥११॥

प्राणस्य शरीरे उत्पत्तिमाविर्भावम् आयतिमागमनम् स्थानं स्थितिं पञ्चधाप्राणापानादि संज्ञया च विभुत्वं व्यापकत्वमध्यात्ममात्मस्वरूपत्वं च विज्ञाय साक्षात्कृत्य अमृतमश्नुते मोक्षसुखं प्राप्नोति अभ्यासः प्रश्नसमाप्त्यर्थः ॥१२॥

## इतितृतीयप्रश्नस्य प्रकाशभाष्यम् ।

## ॥ अथ चतुर्थः प्रश्नः ॥

अपराविद्याविषयकं तत्त्वं संक्षेपेण त्रिभिः प्रश्नैरुपदिश्य अन्नमयं प्राणमयं च कोशं विविच्य अवशिष्टं कोशत्रयं जीवतत्त्वमक्षरतत्त्वं च विवक्षुश्चतुर्थप्रश्नमवतारयति अथेति—

**अथ हैनं सौर्यायणी गार्ग्यः पप्रच्छ भगवन्नेतस्मिन्पुरुषे कानि स्वपन्ति कान्यस्मिञ्जाग्रति, कतर एष देवः स्वप्नान् पश्यति, कस्यैतत्सुखं भवति कस्मिन्नु सर्वे संप्रतिष्ठिता भवन्ति इति ॥१॥**

तस्मै स होवाच यथा गार्ग्यं मरीचयोऽर्कस्यास्तं गच्छतः सर्वा एतस्मिंस्तेजोमण्डले एकीभवन्ति, ताः पुनः पुनरुदयतः प्रचरन्ति । एवं ह वैतत् सर्वं परे देवे मनस्येकी भवति तेन तर्ह्येष पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नादत्ते नानन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते ॥२॥

भा०—अथ तृतीयप्रश्नोपदेशानन्तरं ह एनं भगवन्तं पिप्पलादं सौर्यायणी गार्ग्यः पप्रच्छ पृष्टवान् हे भगवन् एतस्मिन् पुरुषे पुरुषविशिष्ट-शरीरे कानि स्वपन्ति शेरते, कानि जाग्रति जागरणं लभन्ते कतर एष देवः स्वप्नान् स्वप्नगतान् पदार्थान्पश्यति कस्यैतत्सुखं विषयेन्द्रियसंयोगात् भवति कस्मिन्नु सर्वे संप्रतिष्ठिता भवन्ति प्रतिष्ठारूपमाश्रयं प्राप्नुवन्तीति॥१॥

स भगवान् पिप्पलादस्तस्मै पृष्टवते गार्ग्याय होवाच हे गार्ग्य यथा अर्कस्यसूर्यस्यास्तं गच्छतः सायंकाले सर्वा मरीचयः किरणाः एत स्मिन्मण्डले तेजोमण्डले एकीभवन्ति अनेका एकं सम्पद्यन्ते इत्येकीभवन्ति ताः मरीचयः पुनः पुनरुदयतः प्रचरन्ति प्रसारं गच्छन्ति एवं ह वैतत्सर्वं परे देवे मनसि इन्द्रियसमुदायो लयं गच्छति तेन तदा एष पुरुषो न शृणोति, न पश्यति, न जिघ्रति न रसयते न स्पृशते ज्ञानेन्द्रियाणां कमपि व्यापारं न करोति एवं नाभिवदति नादत्ते नानन्दयते न विसृजते नेयायते कर्मेन्द्रियव्यापाराभावश्च तदा भवति तस्मिन् काले स्वपितीत्याचक्षते सूक्ष्मे शरीरे मनोमयविज्ञानमयौ ? कोशावेतेनोपदिष्टौ ॥२॥

प्राणाग्नय एवैतस्मिन् पुरे जाग्रति । गार्हपत्य ह वा एषो अपानो व्यानोऽन्वाहार्यपचनो यद् गार्हपत्यात् प्रणीयते प्रणयना-दाहवनीयः प्राणः ॥३॥

यदुच्छ्वासनिःश्वासावेताहुती समं नयति स समानो मनो ह वा व यजमानः इष्टफलमेवोदानः स एनं यजमानमहरब्रह्म गमयति ॥४॥

भा०—प्राणाग्नय यथाग्नयो गृहरक्षकास्तद्वत् प्राणा रक्षकत्वात् एतस्मिन् पुरे शरीरे जाग्रति सर्वदा गतिमत्त्वात् रक्षका इव तेषां प्राणानां

मध्ये अपानो ह वै गार्हपत्यः एतन्नामकः प्रधानोऽग्निः व्यानः अन्वाहार्य-पचनः दक्षिणाग्निः हृदयाद् दक्षिणच्छिद्रनिर्गमनेन साम्यमुभयोः। गार्ह-पत्यात् प्रणयनात् प्राण आहवनीयः ॥३॥

यदुच्छ्वासनिःश्वासौ भवतः एतावाहुती ते समंनयति तेन समानः। मनो ह वा व एव यजमानः यज्ञानुष्ठाता इष्टफलमुदानः स एनं यजमानं अहरहः प्रतिदिनं ब्रह्म गमयति प्रापयति सुषुप्तावस्थायाम् ॥४॥

**अत्रैष देवः स्वप्ने महिमानमनुभवति यदृष्टं दृष्टमनुपश्यति श्रुतं श्रुतमेवार्थमनुशृणोति देशदिगन्तरैश्च प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवति। दृष्टं चादृष्टं च श्रुतं चाश्रुतं च चानुभूतं चाननु-भूतम् सच्चासच्च सर्वं पश्यति सर्वः पश्यति ॥५॥**

**स यदा तेजसाभिभूतो भवति अत्रैष देवः स्वप्नान्न पश्यत्यथ तदैतस्मिन् शरीरे एतत् सुखं भवति ॥६॥**

भा०—अत्र अस्मिन् शरीरे एष मनोविशिष्टो देवः स्वप्ने स्वप्ना-वस्थायां महिमानं मनसैव सर्वं संकल्प्य सर्वं कार्यजातमनुभवति यद् अदृष्टं दृष्टं प्रत्यक्षाप्रत्यक्षमनुपश्यति साक्षात्करोति श्रुतमश्रुतं शृणोतिश्रवणविषयं करोति। देशदिगन्तरैश्च प्रत्यनुभूतं पुनः पुनः बारं बारं प्रत्यनुभवति जानाति दृष्टं चादृष्टं च श्रुतं चाश्रुतं चानुभूतं चाननुभूतं सच्चासच्च मूर्तभूतं च सर्वं सर्वः सन् पश्यति जाग्रदवस्थायां परिमितमेवानुभवति स्वप्ने परिमितमपरिमितं चेति विशेषः ॥५॥

स यदा यस्मिन् काले तेजसा अभिभूतोभवति ज्ञानशक्तिः आव्रियते यदा तमआवरणेन, तदा स्वप्नान् स्वप्नगतान् पदार्थान् न पश्यति मनोमयं विज्ञानमयं च कोशमतिक्रम्य आनन्दमय एतत् सुखआनन्दम् अनु-भवति ॥६॥

'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते' इति नियमानुसारेण ब्रह्मसकाशात् सृष्टिविस्तारं प्रदर्श्य इदानीं पृथिवीमारभ्य प्राणपदार्थपर्यन्तं लयमुपादिशन् सर्वेषां कार्यपदार्थानां परस्मिन् ब्रह्मण्येव स्थितिं कथयति स यथेति—

स यथा सौम्य वयांसि वासो वृक्षं सम्प्रतिष्ठन्ते, एवं ह वै तत्सर्वं पर आत्मनि संप्रतिष्ठते ॥७॥

पृथिवी च पृथिवी मात्रा चापश्चापोमात्रा च तेजस्तेजोमात्रा च वायुश्च वायुमात्रा चाकाशश्चाकाशमात्रा च चक्षुश्च द्रष्टव्यं च श्रोत्रं च श्रोतव्यं च घ्राणं च घ्रातव्यं च रसश्च रसयितव्यं च त्वक् च स्पर्शयितव्यं च वाक् च वक्तव्यं च हस्तौ चादत्तव्यं चोपस्थश्चानन्दयितव्यं च पायुश्च विसर्जयितव्यं च पादौ च गन्तव्यं च मनश्च मन्तव्यं च बुद्धिश्च बोद्धव्यं चाहङ्कारश्चाहङ्कर्तव्यं च चित्तं च चेतयितव्यं च तेजश्च विद्योतयितव्यं च प्राणश्च विधारयितव्यं च ॥८॥

भा०—हे सौम्य प्रिय ! तथावयांसि पक्षिणो दिवसे इतस्ततः परिभ्रम्य सायंकाले वासोवृक्षं रात्रिनिवासवृक्षं सम्प्रतिष्ठन्ति विश्रामार्थं गत्वा शान्तभावमुपगच्छन्ति एवंहि सर्वं कार्यभूतं जगत् परे आत्मनि संप्रतिष्ठते—एकीभावं प्राप्नोति। तद्यथा पंचभूतानि तेषां सूक्ष्मभूताः पञ्चमात्राश्च पञ्चज्ञानेन्द्रियाणां पञ्चविषया इन्द्रियाणि च पञ्च कर्मेन्द्रियविषयाः पञ्च इन्द्रियाणि च येषां नियामकं मनस्तत्कारणभूतमहंकारं तत्कारणभूता बुद्धिः तत्कारणं चित्तं संकुचितशक्तिपदार्थः उक्तं च चितिरेव चेतनपदादवरूढा चेत्यसंकोचिनी चित्तम्। ( श० सू० ५ ) तदुपरि तेजः प्रकाशात्मकं प्राणश्च शिवं जीवतत्वं प्राणधारकम् परे ब्रह्मणि संप्रतिष्ठते इत्यग्रेण सम्बन्धः ॥८॥

एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः। स परेऽक्षरे आत्मनि संप्रतिष्ठते ॥९॥

परमेवाक्षरं प्रतिपद्यते स यो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु सोम्य स सर्वतः सर्वो भवति तदेष श्लोकः ॥१०॥

विज्ञानात्मा सह देवैश्च सर्वैः प्राणाभूतानिसंप्रतिष्ठन्ति यत्र ।
तदक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्वमेवाविवेशेति ॥११॥

## इति चतुर्थः प्रश्नः ।

भा०—एषहि प्रसिद्धो जीवात्मा द्रष्टा नेत्रेन्द्रिय-प्रयोक्ता, स्प्रष्टा स्पर्शकर्ता, श्रोता श्रवणकर्ता घ्राता घ्राणेन्द्रियप्रयोक्ता रसयिता रसनेन्द्रियेण व्यवहर्ता मन्ता मनो व्यापारसंकल्पविकल्पवान् बोद्धा निश्चयकर्ता कर्ता विधिनिषेधयोरनुष्ठाता 'कर्ता शास्त्रार्थवत्वात्' इति न्यायेन विज्ञानात्मा। पुरुषः पुरि शरीरे शयनात्, स परे अक्षरे अविनाशिनि आत्मनि परब्रह्मणि शिवेतत्त्वेसंप्रतिष्ठते ऐक्यं गच्छति ॥९॥

परमेवाक्षरं प्रतिपद्यते प्रतिपन्नो भवति स यः अक्षरः प्रसिद्ध आत्मा वै उपनिषत्सु प्रतिपाद्यत्वेनाभिमतो महात्मनाम्। तद् अच्छायं ज्योतिः स्वरूपकमशरीरं स्थूलसूक्ष्मकारणशरीररहितमलोहितं रजोदोषरहितं शुभ्रं स्वच्छमक्षरमविनाशिनं वेदयते स्वात्माभेदेन साक्षात्करोति यः स हे सोम्य सर्वज्ञः सर्वश्च भवति "सर्वं समाप्नोसि ततोऽसि सर्वः" इति गीतोक्तेः। अस्मिन् विषये श्लोकोऽपि भवति स एषः ॥१०॥

यत्तत्त्वं पूर्वं विस्तरेणप्रोक्तं तदेव मन्त्रः आह विज्ञानात्मा जीवः सह देवैः इन्द्रियैः सर्वैः सह प्राणाः पञ्च प्राणाः भूतानि स्थूलसूक्ष्माणि यत्र संप्रतिष्ठन्ति ऐक्यं गच्छन्ति कार्यकारणयोरभेदात्। हे सोम्य प्रिय ! यः कश्चिदधिकारी वेद जानाति स सर्वज्ञस्तथा सर्वं ब्रह्मैव आविवेशेति आविशति कालव्यत्ययश्छान्दसः ॥११॥

## इति चतुर्थप्रश्नस्य प्रकाशभाष्यम्

## अथ पञ्चमः प्रश्नः ।

पूर्वस्मिन् चतुर्थे प्रश्ने अक्षरतत्त्वस्य स्वरूपं प्रदर्शितम् तच्चाद्वैतरूपं तस्य विज्ञानेन जीवोऽपि ब्रह्मभावं प्राप्नोति, तथापि साधनेन बिना तस्य प्राप्तिर्न सम्भवति इति हेतोः पञ्चमस्य प्रश्नस्यारम्भः पूर्वप्रकरणे अक्षर-तत्त्वंयन्निर्दिष्टं तस्य वाचकमपि अक्षरब्रह्मतत्त्वं वाच्यवाचकयोरभेदं

मत्वा एकमेवरूपमक्षरस्योपदिष्टम्। 'तस्यवाचकः प्रणवः' 'तज्जपस्तदर्थ-भावनमिति' भगवतापतञ्जलिनोपदिष्टम् । भर्तृहरिणा चोक्तम 'अनादिनिधनं ब्रह्मशब्दतत्त्वं यदक्षरम्'। भगवता वासुदेवेन च गीतायां प्रयाणकाले योगिभिः कथं चिन्तनं कार्यमिति प्रोक्तम् 'ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्' इत्यादि । ओंकारादेव सर्वः शब्दतत्त्वस्य विस्तरो वेदेतिहासपुराणादिरूपः संजातः आधिदैविकभावप्रदर्शनार्थं ब्राह्मणानि चत्वारो वेदाश्च अक्षरतत्त्वेन परमात्मना प्रकटीकृताः 'शास्त्रयोनित्वादिति' भगवतो व्यासस्य सूत्रं व्यनक्ति चैतत् । तत्सर्वं प्रश्नान्ते ओंकारस्य मात्रारूपेणात्रापि निर्दिश्यते। मुमुक्षुभिःओंकारस्यैवाभ्यासोऽनिशं क्रियते । अस्य विशेषविवरणम् माण्डूक्यभाष्ये कृतम्। आगमशास्त्रे शिवशक्तिविष्ण्वादिनामभिरस्यैव तत्त्वस्य विवरणं कृतमस्ति। भगवान् शिवः शिरः पल्लवादिमन्त्रैः सार्धं सर्वत्र प्रणवस्यैव व्याख्यानं तन्त्रेषु अकृत इत्यनेनवेदागमयोरभेद एव सिद्ध्यति। इति सर्वं मनसि निधाय साधकः शिष्यो भगवन्तं पृच्छति अथेति—

**अथ हैनं शैब्यः सत्यकामः पप्रच्छ स यो ह वै तद्भगवन् मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत । कतमं वा व तेन लोकं जयतीति तस्मै स होवाच ॥१॥**

**एतद् वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः । तस्माद् विद्वान् एतेनैवायतनेन एकतरमन्वेति ॥२॥**

भा०—अथ वाच्यरूपमक्षरतत्त्वोपदेशानन्तरं वाचकतत्त्वं ज्ञातुं ह एनं भगवन्तं पिप्पलादं शैब्यः सत्यकामः पप्रच्छ पृष्टवान् हे भगवन मनुष्येषु साधकेषु ह वै यः प्रायणान्तं मरणकाले ओङ्कारमभिध्यायीत ध्यायेत् स कतमं वाव एव लोकं जयति प्राप्नोति।

तस्मै पृष्टवते शैब्याय सत्यकामाय स भगवान् पैप्पलादः उवाच उक्तवान् ॥१॥

हे सत्यकाम एतद्वै ओंकारः परमपरं च ब्रह्म परं शिवतत्त्वमपरं शक्तितत्त्वं सगुणब्रह्मेति ख्यातं तयोर्वाचक तत्त्वम्। तस्मात्कारणाद्विद्वान् साधक एतेनैवायतनेन एकतरंशिवाख्यं ब्रह्मतत्त्वं शक्तितत्वंवा अन्वेति अनुगच्छति

आश्रयतीत्यर्थः। पुराणवचनानि चेत्थं भवन्ति "ओमित्येकाक्षरं ब्रह्म गुहायां निहितम् पदम्। ओमित्येतत् त्रयो वेदास्त्रयो लोकास्त्रयोऽग्नयः। विष्णुक्रमास्त्रयस्त्वेते ऋक्सामानि यजूंषि च।" फलं चाह "ये ब्राह्मणाः प्रणवंवेदयन्ति न ते पुनः संसरन्तीह भूयः" (वा० २० अ०) इत्यादि विस्तरेणोपदिष्टम् ॥२॥

ओंकारस्य मात्राणां विवरणं माण्डूक्ये प्रदर्शितम्। तदेवात्र संक्षिप्योपदिश्यते सेति।

**स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसंपद्यते। तमृचो मनुष्यलोकमुपनयन्ते। तत्र तपसा ब्रह्मचर्येण श्रद्धया सम्पन्नो महिमानमनुभवति ॥३॥**

**अथ यदि द्विमात्रेण मनसि सम्पद्यते सोऽन्तरिक्षं यजुभिरुन्नीयते सोमलोकं स सोमलोके विभूतिमनुभूय पुनरावर्तते ॥४॥**

**यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नः। यथापादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते। तदेतौ श्लोकौ भवतः ॥५॥**

भा०—स साधकः यदि एकमात्रमोङ्कारमभिध्यायीत चिन्तयते स तेन संवेदितो ज्ञानवान् सन् तूर्णमेवत्वरितमेव जगत्यामभिसम्पद्यते आगच्छति। तं पुरुषमृच ऋग्वेदमन्त्रा भूरितिलोकं मनुष्यलोकमुपनयन्ते प्रापयन्ति। तत्र मनुष्य लोके तपसा सत्यादिरूपेण ब्रह्मचर्येण उपस्थेन्द्रियसंयमेन श्रद्धया आस्तिक्यबुद्ध्या सम्पन्नः सन् महिमानमनुभवति महत्त्वं प्राप्नोति ॥३॥

अथ द्विमात्रेण मनसि सम्पद्यते मनोभावेनोपास्ते स साधकः यजुर्भिमन्त्रैरन्तरिक्षं भुवरिति प्रसिद्धं सोमलोकं तत्रउत् ऊर्ध्वंनीयते प्राप्यते स सोमलोके विभूतिमनुभूय तत्रस्थान् भोगान् भुक्त्वापुनरस्मिन् लोके आवर्तते क्षीणे पुण्ये मर्त्यलोकं विशन्तीति गीतोक्तेः ॥४॥

यः पुनः एतं त्रिमात्रेण 'अ उ म' एतेनैवाक्षरेण परं पुरुषमभिध्यायीत ईश्वरतत्त्वं चिन्तयते स तेजसि तेजोरूपात्मके सूर्ये सम्पन्नः यथापादोदर-

स्त्वचा विनिर्मुच्यते सर्पः प्राचीन कंचुकेन मुक्तो भवति एवं ह वै स साधकः पाप्मना दुरितेन विनिर्मुक्तः सन् सामभिः सामाख्यमन्त्रैः स्वरिति प्रसिद्धं ब्रह्मलोकं प्रजापतिलोकमुन्नीयते प्राप्नोति । स तत्र गत्वा एतस्मात् जीवघनात् जीवसमष्टिरूपात् परमीश्वरतत्त्वं तस्मादपि परं पुरिशयं सर्वत्रव्याप्तं पुरुषं परमात्मानम् ईक्षते स्वाभेदेन साक्षात्करोति। एतस्मिन् विषये द्वौ श्लोकौ मन्त्रौ च भवतः ॥५॥

**तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अन्योऽन्यसक्ता अनविप्रयुक्ताः। क्रियासु बाह्याभ्यन्तरमध्यमासु सम्यक्प्रयुक्तासु न कम्पतेज्ञः ॥६॥**

**ऋग्भिरेतं यजुर्भिरन्तरिक्षं सामभिर्यत्तत् कवयो वेदयन्ते। तमोङ्कारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परं चेति ॥७॥**

**॥ इति पञ्चमः प्रश्नः ॥**



भा०—ओंकारस्य तिस्रः मात्रा मृत्युमत्यः मरणधर्मवत्यः प्रयुक्ताः भेदविषयत्वात् अन्योन्यसक्ताः परस्परमिलिताः अनविप्रयुक्ता निश्चयेन सर्वा भेद भजनशीला बाह्याभ्यन्तरमध्यमासु जाग्रत्स्वप्नसुषुप्तिषु अवस्थासु सम्यक्प्रयुक्तासु सम्पादितासु क्रियासु ज्ञः एतन्मात्रातत्त्वज्ञो ब्रह्मदृष्टिमान् ज्ञः एतदनुभवन् न कम्पते स्वरूपतो न विचलति। उक्तं च- 'अकारस्त्वथ भूर्लोक उकारो भुवउच्यते। स व्यञ्जनो मकारश्च स्वर्लोकश्च विधीयते॥ ओंकारस्तुत्रयोलोकाः शिरस्तस्यत्रिविष्टपम्। भुवनान्तं च तत्सर्वं ब्राह्मं तत्पदमुच्यते ॥ मात्रापदंरुद्रलोको ह्यमात्रस्तु शिवंपदम् ॥ (वायु प्र० अ० २०–८, ९, १०) उक्तमात्रात्रयविभागं प्रदर्श्य अमात्रपदेन परमतत्वञ्च प्रदर्शितम्। तस्य फलं द्वितीयश्लोकेऽत्र प्रदर्शितवान् ॥६॥

ऋग्भिः ऋग्वेदमन्त्रैः एतं मनुष्यलोकं यजुर्भिरन्तरिक्षं परलोकं सामभिर्ब्रह्मलोकं साधकः प्राप्नोति। मात्राविभागानुभजनशीलस्य साधकस्य प्रणवं परित्यज्य अन्यस्य कस्यचित् मन्त्रभागस्यावश्यकतैव नास्ति तस्यैवान्तर्गतत्वात् सर्वशब्दजालस्य । विद्वान् यत्तच्छान्तं निष्क्रियमजरं जरादिशरीरधर्मरहितममृतं मृत्युपाशरहितं तुरीयमात्रपदेन लक्षितमतएवाभयंद्वैतवर्जितं (द्वितीयाद्वै भयंभवति) परञ्च शिवशक्तिसामरस्यभावयुक्तमेकं निराकारञ्च स्वरूपेण साक्षात्करोतीति शेषः ॥७॥

॥ इति पंचम प्रश्नस्य प्रकाशभाष्यम् ॥

## ॥ अथ षष्ठः प्रश्नः ॥

पूर्वोक्तस्य सर्वस्य रहस्यजातस्योपसंहाररूपेण संक्षेपेण षोडशकलात्मकं पुरुषं ब्रुवन् षष्ठं प्रश्नमवतारयति अथेति—

अथ हैनं सुकेशा भारद्वाजः पप्रच्छ "भगवन् हिरण्यनाभः कौसल्योराजपुत्रो मामुपेत्य प्रश्नमपृच्छत् षोडशकलं भारद्वाज पुरुषं वेत्थ। तमहं कुमारमब्रुवं नाहमिमं वेद यद्यहमिममवेदिषं कथं ते नावक्ष्यमिति। समूलो वा एष परिशुष्यति योऽनृतमभिवदति। तस्मान्नार्हाम्यनृतं वक्तुम्। स तूष्णीं रथमारुह्य प्रवव्राज। तं त्वा पृच्छामि क्वासौ पुरुष इति ॥१॥

भा०—अथ पंचमप्रश्नानन्तरं ह प्रसिद्धमेनं भगवन्तं पिप्पलादं सुकेशा भारद्वाजः पप्रच्छ पृष्टवान् 'भगवन् हिरण्यनाभ कौसल्यो राजपुत्रो मामुपेत्य आगत्य प्रश्नमपृच्छत् पृष्टवान् 'हे भारद्वाज! त्वं षोडशकलं पुरुषं वेत्थजानासि किम्?' तम् कुमारमहमब्रुवम् उक्तवान् 'हे कुमार! नाहं षोडशकलं पुरुषं वेद जानामि यदि अहमवेदिषम् कथं ते नावक्ष्यम् अवश्यमेव त्वामवक्ष्यम्। समूलो यः परिशुष्यति विनङ्क्ष्यति योऽनृतमसत्यं वदति तस्मान्नार्हामि अनृतंवक्तुम्।' स कुमारः तूष्णीं रथमारुह्य प्रवव्राज गतवान्। तं त्वा त्वां पृच्छामि क्वासौ षोडशकलः पुरुष इति ॥१॥

तस्मै स होवाच इहैवान्तः शरीरे सोम्य स पुरुषो यस्मिन्नेताः षोडशकलाः प्रभवन्ति इति ॥२॥ स ईक्षाञ्चक्रे कस्मिन्नु अहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठते प्रतिष्ठामि इति ॥३॥ स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियंमनः अन्नमन्नाद् वीर्यं तपोमन्त्राः कर्म लोका लोकेषु च नाम च ॥४॥

भा०—तस्मै पृच्छकाय स भगवानुवाच हे सोम्य इहैवान्तः शरीरे सः षोडशकलावान् पुरुषः आत्मायस्मिन् आत्मनि एताः कलाः प्रभवन्ति

आविर्भवन्ति स परतरः परमात्मा ईक्षाञ्चक्रे संकल्पितवान् विचारितवान् कस्मिन् उत्क्रान्ते शरीरादूर्ध्वंगते 'अहं' पदवाच्य उत्क्रान्तो भविष्यामि कस्मिन् प्रतिष्ठते स्थिते प्रतिष्ठास्यामि सर्वव्यवहार प्रवर्तकत्वेन प्रत्यक्षतामेमि इति ॥३॥

स प्राणं शिवाख्यं असृजत् उत्पादितवान् आविर्भावितइत्यर्थः। प्राणात् श्रद्धां कामायनीति वेद प्रसिद्धां सर्वकार्यप्रवर्तिकां शक्तिं तस्याः सकाशात् खं वायुः ज्योति रापः पृथिवी इमानि पंचभूतानि इन्द्रियं मनः अन्नं अन्नाद् वीर्यं तपः कर्म बुद्धीन्द्रियाणि दश, मनः एषां प्रवर्तयितृ एकादशं तस्मादन्नं भोग्यं तस्माद् वीर्यं बलं वीर्यात्तपः ज्ञानं तस्मान्मन्त्रा मन्त्रेभ्यः कर्म लौकिकालौकिकं तस्माल्लोकाः स्वर्गादयः तेषुनामदेवदत्तादि । इमाः षोडशकलावेदोक्ताः आत्मनः संभवन्ति । छान्दोग्ये षोडशकला इत्थमुपदिष्टाः सन्तिः— (१) प्राची दिक्कला (२) उदीची दिक्कला (३) दक्षिण दिक्कला (४) प्रतीची दिक्कला (५) पृथिवी (६) अन्तरिक्षं (७) द्यौः (८) समुद्रः (९) अग्निः (१०) सूर्यः (११) चन्द्रः (१२) विद्युत् (१३) प्राणः (१४) चक्षुः (१५) श्रोत्रम् (१६) मनः, एता उक्तकलासु अन्तर्भवन्ति । 'प्रजापतिः प्रजया संरराणस्त्रीणि ज्योतींषि सचते स षोडशी ।' (य० ३५–५) इति मन्त्रेण षोडशकलानिदर्शनं श्रूयते पराशक्त्या आत्मनश्चाभेदं स्वीकृत्य आगमशास्त्रे षोडशकलानां कामेश्वर्यादिचित्रान्तानां पंचदशानां परिगणनं तथा षोडशीकला ललितारूपा 'नित्या षोडशिकारूपा' इति ललितासहस्रनामसु । एतेन पराशक्तिरपि षोडशीरूपेण आश्रीयते महात्मभिः ॥४॥

आविर्भावक्रमेण कलासृष्टिं प्रदर्श्य तिरोभावं समुपदिशन्नाह सेति—

**स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति, भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते । एवमेवास्य परिद्रष्टुरिमाः षोडशकला पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति, भिद्येते तासां नामरूपे पुरुष इत्येव प्रोच्यते स एषोऽकलोऽमृतो भवति तदेष श्लोकः ॥५॥**

**अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः । तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथा इति ॥६॥**

भा०—स भगवानुवाच यथा स्यन्दमानाः प्रवहन्त्यः समुद्रायणाः समुद्रं प्रति गच्छन्त्यो नद्यो गंगाद्याः समुद्रं प्राप्यास्तं गच्छन्ति एकीभवन्ति। तासां नदीनां नामरूपे भिद्येते निवर्तते समुद्र इत्येव प्रोच्यते केवलः समुद्र एव तस्मिन् काले तिष्ठति। एवमेव अस्य परिद्रष्टुरात्मनः इमाः षोडशपूर्वोक्ताः कलाः पुरुषायणा आत्मनिलयं प्राप्यास्तं गच्छन्ति। तासां नामरूपे भिद्येते निवर्तते। पुरुष इत्येवाद्वैतरूपः प्रोच्यते ब्रह्मविद्भिः। तस्मिन् काले अकलः अमृतो भवति तदेषः श्लोको मन्त्रोऽपि भवति ॥५॥

रथनाभौ अरा इव तस्मिन् आत्मनि कलाः षोडशसंख्यात्मिकाः प्रतिष्ठिताः सन्ति। अन्ते तस्मिन्नेव लयं प्राप्नुवन्ति कूर्मोऽङ्गानि इव सर्वश इति गीतोक्तेः ब्रह्मण एव कलानामाविर्भावितिरोभावौ भवतः। तं वेद्यं वेदनीयं पुरुषं वेद यूयम् जानीथ वचनव्यत्ययच्छान्दसः। मृत्युः वः युष्मान् मा परिव्यथाः पीडयतु इत्यर्थः। निष्कलं निर्गुणं ब्रह्मज्ञात्वैव मृत्युतरणं भवतीति भावः ॥६॥

सम्पूर्णां ब्रह्मविद्यां षड्प्रश्नकर्तृभ्य ऋषिभ्य उपदिश्य भगवान् पिप्पलाद उपसंहरति तानिति—

तान् होवाचैतावदेवाहमेतत् परं ब्रह्मवेद ।
नातः परमस्ति इति ॥७॥

भा०—तान् विनेयान् षड्ऋषीन् ह भगवान् उवाच उक्तवान् एतावदेव एतदहं पदवाच्यं परं ब्रह्मवेद जानामि। अतः परमन्यद् ज्ञातव्यं तत्वं नास्ति "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्" (यजु० ३१-८) इति मन्त्रवर्णोऽपि। अकार पदेन शिवः हकारपदेन शक्तितत्त्वमुभयोरैक्यं यत्र तदेवाहं पदवाच्यं परं ब्रह्मेति तदेव अक्षर ब्रह्मेति नाम्ना पूर्वमुक्तं चतुर्थप्रश्ने। अक्षरब्रह्मशब्दब्रह्मणोश्च ऐक्यमपि तन्त्रेणात्रोपदिष्टम्। षट्त्रिंशत्तत्त्वानां चात्र समावेशः अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः। हकारोन्त्यः कला रूपो विमर्शाख्यः प्रकीर्तितः॥" इति प्रमाणेन अकारमाभ्य हकार पर्यन्तं मातृकामण्डलं तत्त्वेषु, परात्रिंशिकाभाष्य एवं योजितम्। अकारादि विसर्गान्तं शिवतत्त्वं, कादि ङान्तं धरादि नभोन्तं भूतपंचकं, चादि ञान्तं गन्धादि शब्दान्तं तन्मात्रपंचकं, टादि णान्तं पादादि वागन्तं कर्माक्षपंचकं, तादि नान्तं घ्राणादि श्रोत्रान्तबुद्धिकरण पंचकं, पादि मान्तं मनोऽहङ्कारबुद्धि प्रकृति पुरुषाख्यं पंचकं, वाय्वादिशब्दवाच्या यादयो वकारान्ता रागविद्याकलामा-

याख्यानि, शादि क्षान्तं महामायाविद्येश्वरसदाशिवशक्त्याख्यं तत्त्वपंचकं तत्रैव मन्त्रमन्त्रेश्वरमहामन्त्रेश्वराणां क्रमेण स्थितिः, महामायायां विज्ञानकेवलाः पुरुषाः मायापदे प्रलयकेवला मायामारभ्य पृथिवी पर्यन्ताः सकला इमे एव परमात्मना अनुगृहीता मन्त्रेश्वरादिपदं लभन्ते । वेदान्तेषु आधिकारिकेति संज्ञया व्यवह्रियन्ते च । तत्सर्वं संगृह्य चतुः प्रकारकं भवति । 'मायान्तमात्मतत्त्वं विद्यातत्वं शिवान्तं स्यात् । शक्तिशिवौ शिवतत्त्वं तुरीयतत्त्वं समष्टिरेतेषामिति । सच्चिदानन्दनाम्ना च निर्दिष्टं सत्तत्त्वं, चित्तत्त्वम् आनन्दतत्वं चेतित्रयाणां स्वरूपम् । सच्चिदानन्दाद् ब्रह्मणो जातेषु शिवादि क्षित्यन्तेषु शिवशक्त्योरानन्दांशोऽनावृतः, सदाशिवेश्वरशुद्धविद्यानां चिदंशोऽनावृतः मायादि क्षित्यन्तानां तु सदंशमात्रमनावृतं सच्चिदानन्दानामुत्तरोत्तरावरणाभावस्य पूर्वपूर्वावरणाभावव्याप्यत्वनियमाच्छिवतत्त्वे त्रयमप्यनावृतम् । विद्यातत्त्वे सच्चिदंशावनावृतौ आनन्दांशे त्वल्पमावरणं, आत्मतत्त्वे तु चिदानन्दांशौ सम्यगावृतौ तिष्ठतः । आत्मशब्दोऽप्यात्मलाभ इत्यादि प्रयोगेऽस्तित्वमात्रपरत्वेन प्रसिद्धः, विद्याशब्दो ज्ञानरूपचित्परः । शिवशब्दो मोक्षरूपानन्दे प्रसिद्ध इति तेन शब्दत्रयेणैव सच्चिदानन्दांशवत्वलाभ इति तत्वत्रयरहस्यम् । (ललितासहस्रनामभाष्यम्) एवं सर्वेषां वर्णानां लयक्रमेण "अहम्" इति अक्षरब्रह्मतत्त्वेन अद्वैतरूपेण शब्दब्रह्मणा च अभेदोपदेशो भवति, अहं ब्रह्मास्मि इति महावाक्येन चैक्यं संगच्छते इति निर्णयः ॥७॥

**ते तमर्चयन्तस्त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि इति । नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥८॥**

भा०—ते सुकेशादयः षड्ऋषयो भगवन्तं पिप्पलादमर्चयन्तः पूजयन्त आहुः यद् हे भगवन् ! त्वं हि अस्माकं पिता रक्षकः ब्रह्मतत्त्वज्ञानप्रदानेन अविद्यायाः परं पारं तारयसि दर्शयसि अविद्यायाः परं पारं ब्रह्मतत्वं तद् दर्शितवान् । परमऋषिभ्यो नमोऽस्तु आदरार्थे बहुवचनम् । अभ्यासः प्रश्नाख्यब्रह्मविद्या समाप्त्यर्थः ॥८॥ इति ॥

भद्रं कर्णेभिरिति शान्तिः ।

इतिप्रश्नोपनिषत्प्रकाशभाष्यम् ।



